तत्र हेतुः। किञ्च श्रीकृष्णादीनां व्रजागमनं बहिरङ्गजनान्प्रत्याच्छादितयोगमाययेति ज्ञेयम्। समर्थानिमित्तरूपस्य परोढात्वादेर्वास्तवत्वेऽप्यवास्तवत्वमतनं तेषु बहिरङ्गजनेषु। वस्तुतस्तु परोढात्वादिनिमित्तकसमर्थारतिमयः समृद्धिमान्सम्भोगः श्रीराधिकादीनां स्यादेव व्रजस्थे श्रीकृष्णे दन्तवक्रवधोत्तरम्॥

अथ प्रकटलीलायां परकीयात्वं स्वकीयात्वमप्रकटलीलायामिति केचित्। न तत्समीचीनमिति निरस्यतेऽप्रकटलीलागतं स्वकीयात्वं चतुर्थनिरसने। उच्यते रासप्रकरणे श्रीमद्भागवते यद्गोप्यः किल

जारबुद्ध्यापि सङ्गताः (पृ० ११६ प० ४)

इति। अस्य व्याख्यायां श्रीमत्सनातनगोस्वामिभिः प्रकाशितमौपपत्यं श्रीकृष्णस्याप्रकटलीलायामपि। किञ्च

गोपीनां तत्पतीनाञ्च ।३.८७॥

इत्यत्रापि प्रकटाप्रकटलीलयोर्द्वयोरप्यौपपत्यं विनिर्णीतम्। अन्यच्च, व्रजसुन्दरीणां परकीयानिमित्तत्वेनैव महाभावस्वरूप:वं, तेनैव तासां परमोत्कर्षः। तस्मादेवासां रासलीलायामुपयोगः, श्रीनन्दनन्दनस्यापि च पूर्णतमत्वसिद्धिः। अयमुत्कर्षः प्रकटाप्रकटयोरुभयोरपि लीलयोः। अप्रकटलीलायां परकीयात्वाभावे रतिरप्यपकृष्येत। किञ्च स्वकीयारतावपि यदि न स्यान्मिथो दुर्लभत्वं वारणत्वादिकञ्च तर्हि तस्यामपि परमत्वहानिरिति रसशास्त्रनिर्णयः। शृङ्गारस्य पुनश्चरम उत्कर्ष औपपत्य एव न तु दाम्पत्ये। किञ्च भक्तिरसविषयस्य शृङ्गारस्य तद्धनीभूतस्य च समर्थारतिभावस्य परम एवोत्कर्षः।

किञ्चाप्रकटलीलायां परकीयात्वेऽन्यदप्यस्ति प्रमाणम्। दृश्यते च पद्मपुराणे पुरा किल दण्डकारण्यवासिनो मुनयः श्रीरामसौन्दर्यं दृष्ट्वा लुब्धाः सन्तः कामयामासुर्व्रजगोपीत्वमिति। ते च यदैव लब्धभावाः श्रीकृष्णे तदैव गोपीत्वमासाद्य व्रजे जाताः। तत्तु सम्भवत्यप्रकटलीलायां समकालत्वात्, न तु प्रकटलीलायाम्। यतश्चतुर्विंशचतुर्युगे श्रीरामलीला, प्रकटा श्रीकृष्णलीला त्वष्टाविंशचतुर्युगे। अतोऽप्रकटलीलायामेव ता गोप्यः परकीया इति परकीयात्वम्। अन्यच्च दृश्यते यदुपनिषदः किल प्रेमाढ्याः सन्त्यो व्रजे बल्लव्यो जज्ञिर इति। यदैव प्रेमाढ्यास्तदैवेत्यनेन न सम्भवति प्रकटकालस्यापेक्षा। अतोऽप्रकटलीलायामेव तासां तज्जन्म।

तद्गोपीनामपि तदा परकीयात्वं श्री कृ ष्ण स्याप्यौपपत्यञ्च। अतः श्री जी व गो स्वा मि पादे र्लो च न रो च न्यां पूर्वापरसम्बन्धं विना यदप्रकटलीलायां स्वकीयात्वं स्थापितं तत्परमतं न तु स्वमतम्। उक्तञ्च जी व गो स्वा मि पादैः

स्वेच्छया लिखितं किञ्चित्किञ्चिदत्र परेच्छया।

यत्पूर्वापरसम्बन्धं तत्पूर्वमपरं परम् ॥७.१०२॥

इति ॥

अथ साधनचतुष्टयम्। तत्र

वैधी रागानुगा च (पृ० १५२ प० १६)

इति साधनद्वैविध्यम्। तथापि व्र ज म थु रा द्वा र का गो लो का इति साधनप्राप्याणां श्रीभगवतो धाम्नां चातुर्विध्यात्साधनमपि चतुर्विधम्। तत्र केवलं रागानुगामार्गेण भजनवतामेव व्र ज प्राप्तिः। वैधीमार्गेण तु भजनवतां समञ्जसाया रतेर्गौणमुख्यप्रायिकत्वानां तारतम्येन क्रमेण गो लो को द्वा र का म थु रा चेति स्थानत्रयस्यावाप्तिः। केनचिदपि वैधीसम्पर्केण रागानुगापकृष्यते पय इव गोमूत्रसम्पर्केण। अतो वैधीयुक्ता रागानुगा व्र ज स्थं श्री न न्द न न्द नं प्रापयितुं न कथमपि प्रभवति किन्तु साधनानुरूपं तत्तद्धामगतमेव भगवन्तं प्रापयति। तत्रैश्वर्यानुसन्धानात्साधनस्य वैधत्वेन गो लो क प्राप्तिः। मनसि रागानुगाभावत्वेनापि बहिर्वैधत्वेन द्वा र काप्राप्तिः किञ्चिन्मिश्रत्वेन च म थु रा प्राप्तिः। केवलस्तु माधुर्यानुभवो यस्मिन्भजने न लेशतोऽप्यैश्वर्यानुसन्धानं तदेव भजनं नाम रागानुगात्वेन व्र ज स्थं न न्द न न्द नं श्री कृ ष्णं प्रापयतीति निश्चयः। अयमर्थः। यत्रान्तर्बहिश्चेत्युभयथापि भजनं व्र ज लोकानुसारं तत्रैवास्य रागानुगासाधनस्य फलत्वेन व्र ज प्राप्तिः स्यात्॥

अथ विरोधखण्डनम्। श्री कृ ष्ण स्योपपत्यं वास्तवमवास्तवं वेत्यस्तीह विरोधः। आवश्यकं तत्खण्डनम्। तत्रोच्यते वास्तवमेव तदौपपत्यमिति। अवास्तवत्वे कथं न श्री शु क दे व पादैस्तथा परिहृता परदाराभिमर्षणशङ्का कथं वा तद्दोषापनयनाय श्री कृ ष्ण स्य परमेश्वरत्वं परमात्मत्वं तेजीयस्त्वञ्चेत्यादयो हेतवः प्रदर्शितास्तैः श्री भा ग व ते।

किञ्च

वर्तितव्यं शमिच्छद्भिर्भक्तवन्न तु कृ ष्ण वत् ।५.२॥

इत्यादिभिरपि वचनैरौपपत्यमेव श्री कृ ष्ण स्य ख्यापितम्। अन्यथा श्री व्र ज-

दे वी नां चरणरेणुमिच्छता श्रीम दु द्ध वे न यो नाम भक्त्युद्रेकः प्रदर्शितः स खलु सुदुस्त्यजस्वजनार्यपथभ्रष्टास्वेव व्र ज दे वी षु। व्यभिचारदोषोऽपि तासां वास्तवेन परकीयात्वेन भृशमाशङ्क्य गो स्वा मि पादैः परिहृतः श्री कृ ष्ण-विषयत्वात्। सन्तीदृशानि बहूनि प्रमाणानि तासां वास्तवपरकीयात्वे।

किञ्च न न्दा त्म ज त्वस्य वास्तवत्वेऽपि श्री कृ ष्ण स्य यथानादित्वं तद्व-दौपपत्यस्य वास्तवत्वेऽपि श्री रा धि का दीनां परमशक्तित्वं श्री कृ ष्ण स्य च परमशक्तिमत्त्वं मन्तव्यम्। अतो नास्ति कश्चिद्विरोधः।

अन्यदपि वर्तते किञ्चिद्विरुद्धं मतम्। तत्पुन र्ल लि त मा ध वी यं वृत्तान्त-मवलम्ब्य प्रवृत्तम्। दृश्यतेऽत्र यच्छ्री रा धा च न्द्रा व ल्योः स त्य भा मा-रु क्मि णी रूपेण प्रकाशः। सोऽयं लीलाप्रकाशः कल्पभेदेनेति केचिन्मन्यन्ते। न तु तद्युक्तम्। ल लि त मा ध वे द्वा र का गतत्वेन विवृता लीला प्रकाशान्तरेण, न तु मूलप्रकाशत्वेन। अतः श्री भा ग व त गता लीला श्री ल लि त मा ध व ग ता च लीला समकल्पेति विरोधखण्डनम्॥

अथ श्री कृ ष्ण स्य प्रतिपादितमादौ समर्थोत्कर्षाख्ये प्रकरणे पूर्णतमत्वम्। सन्ति च नराकारपरब्रह्मरूपे श्री कृ ष्णे बहवोऽद्भुता गुणाः। न त्वेतावन्तो गुणा गो लो क ना थे। तत्रासाधारणं हि गुणचतुष्टयं श्री कृ ष्णे नरलीलत्वात्। यथाह

> लीलाप्रेम्णा प्रियाधिक्यं माधुर्यं वेणुरूपयोः।
> इत्यसाधारणं प्रोक्तं गो वि न्द स्य चतुष्टयम्॥ ६.४॥

इति। अथ व्र ज धाम्नोऽपि माधुर्यप्रचुरप्रेममयत्त्वादस्ति रसवैशिष्ट्यम्। तत्रैव समर्थाया रतेर्मुख्यः प्रकाशः। तद्वशादेव च व्र ज स्य परम उत्कर्षः। व्र ज स्थानां श्री कृ ष्ण प्रे य सी नामुत्कर्षोऽपि समर्थारतित्वादेव। किञ्च श्री व्र जे न्द्र न न्द न स्य प्राप्तये श्री ल क्ष्मी रपि तपश्चर्यामकरोदिति माधुर्य-रसविग्रहस्य श्री व्र जे न्द्र न न्द न स्य गो लो क ना थ परव्योमनाथापेक्षया-प्युत्कर्ष इति मन्तव्यम्॥

[ ग्रन्थकारविषये वक्तव्यविशेषः ]

अत्र ग्रन्थकृतो व्याख्यानशैली विवेचनपद्धतिश्च प्राचामिव दार्शनिकानाम्। समुच्छिद्यन्ते ताभ्यां संशयास्तर्काश्च प्रतिकूलाः। व्यवस्थापयत्येव सिद्धान्तान्स्वप्रमाणं सोपष्टम्भञ्च युक्त्युपन्यासपूर्वम। वागप्यस्य गद्यपद्यमयी। अत्र प्रदर्शितेषु सिद्धान्तेषु केचिदभिनवा एवेति प्रतीयते। यथा का त्या य नी व्रतपराणां कन्यकानां रतिः समञ्जसाप्राया , न तु समर्था। प्रकटाप्रकटयोर्लीलयोश्च स्वरूपेणैक्यं , न तु द्वैविध्यं , रतेस्तन्निमित्तानाञ्चाभेदात्। तत्र प्रपञ्चेन्द्रियाणां गोचरत्वेनागोचरत्वेन च प्रकटाप्रकटरूपेण लीलाया द्वैविध्यमिति। किञ्च। अप्रकटलीलायामपि परकीयात्वम्। वैधी रागानुगा चेति साधनस्य द्वैविध्येऽपि धाम्नां चातुर्विध्यात्साधनस्य चातुर्विध्यम्। किञ्च श्रीम द्भा ग व त-गताया ल लि त मा ध व गतायाश्च लीलायाः समकल्पत्वमिति।

शास्त्रेऽप्यस्य ग्रन्थकृतः सूक्ष्मा प्रगाढा च दृष्टिः। युक्तितर्कोपस्थापनेऽपि प्रकृष्टमस्य नैपुण्यम्। तदेतत्सर्वं ख्यापयत्यस्य महद्वैदुष्यमिति निश्चयः।

अथ कोऽयं नो ग्रन्थकारः। दृश्यते रा जे न्द्र ला ल मि त्र स्य कोशसमूहविवृतौ यत्कृतिरियं श्री जी व गो स्वा मि पादानामिति। अस्ति हि तत्रेयं पङ्क्तिः श्री जी व गो स्वा मि कृत सा र स ङ्ग्र हः सम्पूर्ण इति। स पुन र्मि त्र स्य कोशोऽन्विष्यापि नास्माभिरासादितः। न चेयं पङ्क्तिरवलोक्यते नश्चतुर्णां कोशानामेकतमस्मिन्नपि। न च शक्नुमो वयमप्येतस्य ग्रन्थस्य निर्णेतुं श्री जी व पादरचितत्वम्। सन्ति पुनर्हेतवस्तदर्थबाधकाः। तत्र केचन सूच्यन्ते। उक्तं ग्रन्थकृता महाभावस्वरूपप्रकाशने

> अस्य स्वेच्छाकृतव्याख्या सेव्यतेऽसौ मया सुधा।
> श्रीम ल्लो च न रो च न्यां तत्कृद्भिर्या सुसञ्चिता ॥ १. ३० ॥

इति। श्रीमं ल्लो च न रो. च नी नाम श्रीम द्रू प गो स्वा मि पादकृताया उ ज्ज्व ल नी ल म णेः श्री जी व कृता टीका। न खलु स्वकृतां लो च न-रो च नीं व्याख्यां सेवितुं तत्रभवा श्री व पादः स्वयमेवेत्थं ब्रुयात्। किञ्चास्मदीये ग्रन्थे ( पृ० १२३ पं० १४-१६ ) दृश्यत इयमपरा पङ्क्तिः

अत एव श्री लो च न रौ च न्यां पूर्वापरसम्बन्धं विना यत्किञ्चिल्लिखनं वर्तते तत्खलु परमतं न तु स्वमतम्। यथा श्री लो च न रो च नी टीकाकृद्भिरुक्तं तस्यामेव टीकायां

स्वेच्छया लिखितं किञ्चित्किञ्चिदत्र परेच्छया ।
यत्पूर्वापरसम्बन्धं तत्पूर्वमपरं परम् ॥ ३.१०२ ॥

इति । पङ्क्तिद्वयं स्पष्टमेव सूचयति यद्भिन्न एवायं ग्रन्थकारो जी व पादात् ।

किञ्च । अस्ति भ क्ति र सा मृ त सि न्धो र्जी व पादकृता टीका दु र्ग म-स ङ्ग म नी नाम । तत्र

बालिकेयं त्रिवर्षीया वर्षीयसि समीक्ष्यताम् । १.६० ॥

इत्यादिश्लोकस्य व्याख्यायां श्री जी व पादेन त्रिवर्षा बालिका सेयम् इत्येष एव पाठो गृहीतः । प्रदर्शिता च तत्र युक्तिरपि । सा र स ङ्ग्र हे तु न स जी व-सम्मतः पाठः । इतोऽपि प्रतीयते यद्भिन्न एव श्री जी वः सा र स ङ्ग्र ह कारात् ।

सिद्धान्तेष्वपि केषुचिद्भिद्यते श्री जी व स्तस्माद्विशेषेण त्वप्रकटलीलायां परकीयात्वव्यवस्थायाम् । अतो न सङ्गच्छते श्री जी व स्य सा र स ङ्ग्र ह-कर्तृत्वम् । रा जे न्द्र ला ल मि त्र लब्धे कोशे सा किलोक्तिस्तु तस्य ग्रन्थस्य गौरवं वर्धयितुकामेन भ्राम्यता वा लिपिकरेण कृतेति प्रतिभासते ।

अस्मत्सङ्गृहीतेषु पुस्तकेषु केवलमेकस्मिन्नेव ( 'डि'-संज्ञके ) ग्रन्थसमाप्ते-रूर्ध्वं दृश्यतेऽयं लिपिकारस्य पद्यबन्धः

श्री रू प क वि रा जे न कृतग्रन्थार्थ एव सः ।
मनो रे स्वाद्यतां नित्यं नात्र कालविचारणा ॥

इति । अस्मादवगम्यते श्री रू प क वि रा ज एव कर्तास्य सा र स ङ्ग्र ह स्येति । किञ्च दृश्यन्ते पूर्वस्मिन्नेव पुस्तके तत्पद्यानन्तरं गुरुशिष्यपरम्परया केचित्प्रशस्तिश्लोकाः । तेष्वप्ययं श्लोकार्धः

श्री रू प क वि रा ज स्य पादाब्जे मम मज्जतु

इति । सूच्यत एवास्माद्य त्सा र स ङ्ग्र ह स्य श्री रू प क वि रा जः कर्तेति । न पुनरेतदपि शक्नोत्येकान्तेन निरूपयितुं ग्रन्थकारम् । यतो न चायमर्थोऽन्येषु त्रिषु पुस्तकेषूपलभ्यते । इदमपि भवितुमर्हति यदतिगौरवादारोपितमत्र श्री रू प-क वि रा ज कर्तृत्वं सा र स ङ्ग्र ह स्येति ।

किञ्च । महापण्डितः श्री रू प क वि रा जः किलोत्तरकाले गौ डी य-वैष्णवसिद्धान्तमवधीर्य सहजीयपथपथिकैरनुसृतं परकीयामतं सुदृढं निर्धार्य स्वशिष्येषु प्रचारयामासेत्यस्ति काचित्किंवदन्ती । न पुनरेतदुपोद्बलकमासी-

त्किञ्चिदुपलब्धम्। नापि पूर्वं दृष्टः कोऽपि ग्रन्थो येनावसीयेत सोऽर्थः। अथायं सारसङ्ग्रहश्चेच्छ्री रूपकविराजस्य कृतिरिति गृह्येत तदेदं पुनश्चिन्तनीयं यत्स्पष्टं प्रतीयमानेऽपि महति पाण्डित्येऽत्र ग्रन्थकर्त्रा न दूषणं गौडीयवैष्णवसिद्धान्तानां नाप्यनादरः कश्चिद्गोस्वामिपादानाम्।

अस्तीह काप्यपरा जनश्रुतिः। स किल रूपकविराजः श्रीनिवासाचार्यतनयायाः श्रीमत्या हेमलतायाः शिष्य आसीत्। सैनं गौडीयवैष्णवसम्प्रदायाद्बहिश्चकार। ततः प्रभृत्येव चासीदुद्भवः शाखाया अतिवाडीति ( अतिवृद्धिरिति ) प्रसिद्धायाः।

यथा तथा वा भवतु नाप्यत्र गोस्वामिपादसिद्धान्तेष्वनादरः। शास्त्रप्रमाणबलेनैव तु निर्णीतं श्रीव्रजदेवीनां नित्यपरकीयात्वं महाभावस्वरूपनिष्पत्तये। न चानेन सहजीयमतपरकीयात्वदोषसम्पर्कः। यदि तावद्रूपकविराज एव कर्ता सारसङ्ग्रहस्य तर्हि किंवदन्तीवृत्तस्यैतस्य समाधानायेदमुक्तं भवेद्यत्तद्विरचनकालोत्तरं केनापि हेतुना गौडीयसिद्धान्तदूषणे कृतास्य मतिरिति। यद्वा वृत्तमेतन्न प्रमाणार्हम्।

श्रील रूपकविराजः श्रीविश्वनाथचक्रवर्तिपादानां पितृव्य इत्यपि वृद्धमुखेभ्यः श्रूयते। न पुनर्ज्ञायते किमिह प्रमाणमिति। तथापि सारसङ्ग्रहमतदृष्ट्या स खलु सम्बन्धः शक्येतापि कथञ्चित्सम्भावयितुम्। यतः सारसङ्ग्रहे तत्कर्तुः प्राक्कालिकानां बहूनां वैष्णवाचार्याणां नामानि दृश्यन्ते न पुनर्विश्वनाथचक्रवर्तिनां तात्कालिकानां व्याख्यातॄणां वा। किञ्च श्रीव्रजदेवीनां नित्यपरकीयात्वविषये श्रीमद्विश्वनाथव्याख्या सारसङ्ग्रहमतानुकूलेत्यपि नः प्रतिभाति। स चेच्छ्री रूपकविराजः श्रीविश्वनाथस्य पितृव्यः स्यात्तर्हि सम्भवतीदं यत्पितृव्यमतं भ्रातुष्पुत्रेणाद्रियतेति। यथा वा भवतु। नानयोः सम्बन्धनिर्णये किमप्यसंदिग्धं प्रमाणम्। श्रील रूपकविराजस्य सारसङ्ग्रहकर्तृत्वेऽपि न किञ्चनात्यन्तिकं प्रमाणमुपलभ्यते। तद्यः कोऽप्यस्तु कर्तास्य ग्रन्थस्य स खलु पण्डितधुरन्धरः प्राचीनः श्रीविश्वनाथचक्रवर्तिपादेभ्यः। अनुसर्ता च स श्रीरूपगोस्वाम्यादिप्रतिष्ठापितस्य गौडीयवैष्णवमतस्येत्यवधारयामो वयमवलोक्य सारसङ्ग्रहम्। स च स्वग्रन्थे श्रीमुकुन्दस्य नमस्काराद्यारचयंस्तच्छिष्य आसीदित्यपि सम्भवति॥

ददामहे च यत्कमपि परिचयमेतद्ग्रन्थोदाहृतानां प्राचीनानां निबन्धाना-
माचार्यादीनाञ्च। तत्रोपनिषत्सु नाम्नोल्लिखिता गोपालतापनी। पुराणेषु
विनिर्दिष्टं पद्मपुराणं विष्णुधर्मोत्तरमादिपुराणं स्कन्दपुराणञ्च
विशेषतो भागवतपुराणञ्च। इतिहासेषु महाभारतं तत्र विशेषतः
श्लोकाश्च तदन्तर्भूताया श्रीमद्भगवद्गीतायाः। वेदाङ्गेषु पाणिनीयं व्याक-
रणम्। कोषेष्वमरकोषमात्रम्। प्राचीनसाहित्येषु नैषधकाव्यवाक्यम्।
नाम्ना विषयवाक्यद्वारा च सङ्गृहीतानि वैष्णवशास्त्राणि। तत्र वैष्णवदर्शनेषु
ब्रह्मसंहिता पञ्चमाध्यायात्मिका। वैष्णवतन्त्रेषु बृहद्गौतमीयतन्त्रम्।
रसशास्त्रसंहितायाञ्च विष्णुगुप्तसंहिता सकृदुद्धृता। प्राक्चैतन्य-
वैष्णवग्रन्थेषु जयदेवकृतं गीतगोविन्दं बिल्वमङ्गलकृतञ्च कृष्ण-
कर्णामृतं, नाम्ना चाचार्या विद्यापति महोदयाः। उदाहृताश्च बहवो
गौडीयवैष्णवसिद्धान्तग्रन्थाः। तत्र श्रीरूपगोस्वामिकृतिषू उज्ज्वल-
नीलमणीत्याख्यं भक्तिरसशास्त्रं, ललितमाधवं विदग्धमाधव-
ञ्चेति नाटकं, दानकेलिकौमुदी च नाटिका, तथा लघुभागवता-
मृतं, पद्यावली स्तवमाला च। श्रीसनातनगोस्वामिकृतेषु
ग्रन्थेषु बृहद्भागवतामृतं भक्तिरसामृतसिन्धुश्च। उल्लिखिता
कविकर्णपूरकृता चानन्दवृन्दावनचम्पूः कृष्णाह्निककौमुदी च,
रघुनाथदासगोस्वामिना कृता च स्तवावली। श्रीभागवतादि-
ग्रन्थानां टीकास्वूदाहृता नाम्ना विषयवाक्येन च श्रीधरस्वामिपादकृता टीका,
श्रीसनातनगोस्वामिना च विरचिता वैष्णवतोषणी। अन्या च
भक्तिरसामृतसिन्धोः श्रीजीवगोस्वामिकृता टीका दुर्गमसङ्गमनी
तथोज्ज्वलनीलमणेर्लोचनरोचनी। वङ्गवाङ्मयवैष्णवग्रन्थेषु
श्रीकृष्णदासकविराजगोस्वामिनां चैतन्यचरितामृतादप्यु-
द्धृता वचनपङ्क्तिः। अत्र नाम्ना गृहीतानां ग्रन्थानां तत्कर्तॄणाञ्च नामानि तत्तदनु-
क्रमणीत एवावगन्तव्यानि। सुप्रसिद्धानीमानीति न किमपि विशेषेण
वक्तव्यम्॥

[ ग्रन्थस्य कालनिरूपणम् ]

अस्तुशाकोऽप्यस्य ग्रन्थकृतः कालनिर्णयः शक्यते कथञ्चित्कर्तुं तेन गृहीतागृहीतैर्नामधेयैः सुप्रथितानां गौ डी य वैष्णवाचार्याणाम्। श्री कृ ष्ण दा स क वि रा ज गो स्वा मि नामर्वाचीना वैष्णवाचार्या न तेन निर्दिश्यन्ते। न वा गृह्यते तेषां किमपि वचनम्। श्री वि श्व ना थ च क्र व र्ती श्री ब ल दे व वि द्या भू ष ण श्चे त्येतौ सुप्रसिद्धावाचार्यौ। सन्ति च तयोः प्रसिद्धानि सिद्धान्ततत्त्वानि निबन्धाश्च। न पुनरस्मि न्सा र स ङ्ग्र हे तद्गतं किमपि ज्ञायते। न चैतद्युक्तमेतस्मिन्सिद्धान्तसङ्ग्रहरूपे सा र स ङ्ग्र हे विनास्य पूर्वभावित्वम्। अप्रकटलीलाया परकीयात्वमिति सिद्धान्तितं सा र स ङ्ग्र हे। श्री वि श्व ना थ च क्र व र्ति ना प्या न न्द च न्द्रि का या मु ज्ज्व ल नी ल म णि टीकायां स एव सिद्धान्तः प्रदर्शितो व्र ज दे वी नां प्रकटाप्रकटत्वेन नित्यमेव परकीयात्वमिति। सा र स ङ्ग्र ह स्यार्वाचीनत्वे नूनं तत्र प्राचीनः श्री वि श्व ना थ च क्र व र्तिसिद्धान्तः प्रमाणत्वेनाग्रहीष्यत। न त्वगृह्यत। अतोऽनुमीयते य त्सा रस ङ्ग्र ह कृच्छ्री वि श्व ना थ च क्र व र्ति तः प्रागेव बभूवेति। ततश्च मन्महे यदेष प्रा ग्वि श्व ना था दर्वाक् च कृ ष्ण दा स क वि रा ज गो स्वा मि न इति।

क वि रा ज गो स्वा मि नो वाङ्मयं चै त न्य च रि ता मृ तं शकवत्सराणां १५०३-तमे १५३७-तमे वा समपूर्यतेति तदुपसंहारश्लोके [ शाकेऽसिन्ध्वग्निवाणेन्दौ ' शाकेऽग्निबिन्दुबाणेन्दौ इति ] पाठभेदं कुर्वन्तो वादिनो विवदन्ते। तदेतद्यथा तथा वा भवतु। सा र स ङ्ग्र ह स्तु तदुत्तरकालेऽरच्यत।

अस्मदुपलब्धेषु चतुर्षु पुस्तकेष्वेकतमस्य ('सि'-संज्ञकस्य) लिपिकालः शकाब्दानां १६३३ इति। अतोऽस्य ग्रन्थस्य विरचनकालस्ततः पूर्वं इतीह न स्तोकोऽपि संशयः। श्री वि श्व ना थ च क्र व र्ति नः कृतिः श्री कृ ष्णभा व ना मृ तं १६०१-तमे शकवत्सरे व्यरच्यतेति। तस्यैव च श्रीम द्भा ग व त टीकायाः सा रा र्थ द र्शि न्या नाम कालः शाकः १६२६ इति। अतो मन्यते वि श्व ना थ स्य कालो न्यूनाधिक्येन शाकः १५६१—१६३० इति। सा र स ङ्ग्र हस्तु तत्पूर्वमासीदिति पुस्तकलिपिकालेनापि स कालो न विसंवदति।

अवोचाम पूर्वं काञ्चिज्जनश्रुतिं यच्छ्री नि वा सा चा र्य स्य दुहिता ठ कु रा णी हे म ल ता श्री रू प क वि रा जं पण्डितमपि गौ डी य मतं दूषयन्तं सम्प्रदायाद्बहिश्चकारेति। श्री वि श्व ना थ च क्र व र्ती किल श्री नि वा सा-

चार्य समकालिकस्य श्री न रो त्त म ठ क्कु र स्य शिष्यपरम्परया चतुर्थस्थानीयः। अनेनापि सूचितं सा र स ङ्ग्र ह कर्तुः श्री रू प क वि रा ज स्य प्राक्तनत्वं वि श्व ना था दिति। यद्यपि रू प क वि रा ज स्य तदेतद्ग्रन्थकर्तृत्वे सन्दिह्येत तथापि निःसंशयमेतद्यद् गौ डी य पण्डितवर्येण केनापि १५५०-१६०० शकवत्सराणां मध्ये सा र स ङ्ग्र हो विरचित इति॥

[ सारसङ्ग्रहमातृकाविषयसूचनम् ]

संस्करणमेतदुपहरतामस्माकं पुस्तकलिप्यादीनां मातृकाविषयेऽस्ति नाम वक्तव्यविशेषः। तत्रादौ प्रस्तुमो य त्क लि का ता वि श्व वि द्या ल य स्य व ङ्ग-भाषाविभागशीर्षण्येन श्रीमता ख गे न्द्र ना थ मि त्र महोदयेन 'सि'-संज्ञकः कोशो नो गोचरीकृत इति। तदेतत्कोशो व ह र म पु र इति गौ ड देशविभागात्संगृहीतः क लि का ता वि श्व वि द्या ल य स्य भारतीयपुरावृत्तशाखायाः पालिशाखायाश्चाध्यापकेन श्रीमता न लि नी ना थ दा श गु प्त महोदयेन। तदेतदुपलभ्य गौ ड सिद्धान्तपूर्णमभिनवं पुस्तकं महानासीत्खल्वस्माकं प्रमोदः। तत्र पुनर्मि त्र महोदयस्य प्रोत्साहनेनैवास्माकं ग्रन्थस्य सम्पादने प्रथमा प्रवृत्तिरिति तस्मै विज्ञापयामो धन्यवादम्।

अथ क लि का ता वि श्व वि द्या ल य स्य तात्कालिकानां संस्कृतशाखामूर्धन्यानां श्रीमतां वि धु शे ख र भ ट्टा चा र्य महोदयानां विशेषतस्तु क लि-का ता वि श्व वि द्या ल य स्य स्नातकोत्तरपरिषदध्यक्षाणां सुगृहीतनामधेयानां श्रीमतां श्या मा प्र सा द मु खो पा ध्या य महोदयानाञ्च समुत्साहेन सम्मत्या च गृहीतोऽयं सा र स ङ्ग्र ह ग्रन्थः संशुद्ध्यादिपूर्वं प्रकाशनाय क लि का ता-वि श्व वि द्या ल या दा शु तो ष संस्कृतग्रन्थमालायाम्। अतस्तेष्वस्माकमाधमर्ण्यं निवेदयामः सबहुमानम्।

ढा का वि श्व वि द्या ल या दपि पुनर्लब्धानि त्रीणि मातृकान्तराणि। तान्यत्र 'ए-वि-डि' इति संज्ञाक्रमेण विनिर्दिशामः। सर्वेषां कोशानां लिप्यादिविषये विस्तर स्त्वा ङ्ग्ल भाषाभूमिकायां द्रष्टव्यः।

चतुर्णां कोशानां भाषादिकं यत्नतः परीक्ष्य विविच्य च शुद्ध्यशुद्धी संस्करणमेतत्सम्पादितं ग्रन्थस्य। यथामति गृहीतेऽपि पाठे प्रदर्श्यंते तत्र तत्र पाठान्तरं पादटीकायाम्। तत्र पुनः 'डि'-संज्ञककोशात्संगृह्य विनिवेशिता

संस्कृतटिप्पनी यथोपयोगं पादटीकायाम्। ग्रन्थोद्धृतानां श्लोकानां विषयवाक्यादीनाञ्च ह्याकरमनुसन्दधाना वयं तत्रापि तत्सर्वं निर्दिशामः। सुधियः सहृदयाश्चेत्पाठकास्तुष्येयुस्तर्हि श्रमो नः सफलो भवेदिति विश्वसिमः॥

[ उपसंहारः ]

गृहीतेऽपि यत्ने मुद्रायन्त्रघर्षणादिना केषाञ्चिदक्षराणां भङ्गतोऽनिवार्याः खलु सन्ति केचन मात्राच्युतिदोषाः। तानपरांश्च सर्वान्भ्रमप्रमादादिदोषान्संशोधयितुं सादरं सप्रश्रयमभ्यर्च्यन्ते तत्रभवन्तः सुधियः। ग्रन्थशेषे यथामति प्रणीतं शुद्धिपत्रम्। अन्यान्विषयांश्च यथोपयोगमकाराद्यनुक्रमणिकया सूचयामः पाठकानां तत्तदवगतिसौकर्याय।

अथ सुगृहीतनामधेयाः सर्वविद्याजीवातवः क लि का ता वि श्व वि द्या ल य स्य प्राणोज्जीवका भारतगौरवभूमयः श्री स र स्व त्यु पाह्वास्तत्रभवन्त आ शु तो ष मु खो पा ध्या य महाभागा येषां स्मरणविधावियं संस्कृतग्रन्थमाला सुरगिरमणिशोभिता मालिकेव सुचिरं वर्धयतुतरां श्रीभारतीश्रियमिति कामयामहे।

निवेदयामः सप्रश्रयं यत्क लि का ता वि श्व वि द्या ल य स्य पूर्वतन-संस्कृतविभागमूर्धन्या म हा म हो पा ध्या याः श्री वि धु शे ख र भ ट्टा चा र्य-महोदया अवसिते च तेषां नियोगकाले तदुत्तरं तत्पदभाजस्तत्रभवन्तः पण्डित-प्रवरा 'डक्टर्' इत्युपाह्वाः श्री सा त क डि मु खो पा ध्या य महोदयाश्च ग्रन्थस्यैतस्य संस्करणविषये यथायोगमुपदिशन्तः साहायकञ्च विदधाना अस्मानधमर्णयन्तीत्यलं पल्लवितेन। इति॥

| नदीया-चण्डीपुरतः<br>शकाब्दाः १८६६ | श्रीराधारमणगोस्वामिनः<br>श्रीकृष्णगोपालगोस्वामिशास्त्रिणश्च |
|---|---|

# विषयानुक्रमणी

---

# TEXTUAL CONTENTS

## ABBREVIATIONS

[Note : The following abbreviations for books and commentaries are referred to in the footnote with comma after them while abbreviations for Manuscripts A B C D are refered to without such punctuations after them].

AK = *Amarakoṣaḥ*, edited by Viṣṇudatta Śarman, Veṅkaṭeśvara Press, 1929.

AVC = *Ānandavṛndāvanacampū* of Kavi Karṇapūra, edited by Mukundadeva Śāstrin with the commentary called *Sukhavartanī*, printed in Bombay Mitra Press, Vikramābda 1955.

BBA = *Bṛhadbhāgavatāmṛtam* of Sanātana Gosvāmin edited by Nityasvarūpa Brahmacārin.

BBT = *Bṛhadbhaktitattvasāra* by Rādhānātha Kāvasī.

BG = *Śrīmadbhāgavadgītā* edited with the commentaries of Śaṅkarācārya, Ānandagiri and Śrīdharasvāmin, by Kailāsacandra Sinha, 2nd edn., B.S. 1298.

BP = *Śrīmadbhāgavatapurāṇam* edited with Śrīdhara Svāmin's commentary by Pañcānana Tarkaratna, Vaṅgavāsi Press, Calcutta.

BRS = *Haribhaktirasāmṛtāsindhu* also called *Bhaktirasāmṛta sindhu* of Rūpa Gosvāmin, edited by Gosvāmī Dāmodara Śāstrin, Acyutagranthamālā No. 6, 1st edition, Benares, Vikrama era 1988.

BRS(K) = Kārikā Portions forming an appendix to *Haribhaktirasāmṛtasindhu* (See BRS).

CC = *Caitanya-caritāmṛta* of Kṛṣṇadāsa Kavirāja Gosvāmin, edited by Rādhāgovinda Nātha, 2nd edition.

DKK = *Dāna-keli-kaumudī* of Rūpa Gosvāmin, edited with Jīva Gosvāmin's commentary by Rāmanārāyaṇa Vidyāratna, Rādhāramaṇa Press, Murshidabad Berhampur.

DS = *Durgama-saṃgamanī*, a commentary of Jīva Gosvāmin on *Haribhaktirasāmṛtasindhu* (See BRS).

GG = *Gīta-govindam* of Jayadeva, edited with Pūjārī Gosvāmin's commentary by Upendranātha Mukhopādhāya, 7th edition, Basumatī Sāhitya Mandir, Calcutta.

GLA = *Govinda-līlāmṛtam* of Kṛṣṇadāsa Kavirāja Gosvāmin, edited by Sacīnandana Gosvāmin, Caitanyābda 422.

GT = *Gautamīyatantram*, Basumati Press, 1334 B. S.

GTap = *Gopālatāpanī* (*Upaniṣad*), Uttaravibhāga, with commentaries, edited by Rāmadeva Miśra, 4th edition, Rādhāramaṇa Press, Murshidabad Berhampur, 1324 B. S.

KK = *Kṛṣṇa-karṇāmṛtam* of Līlāśuka, critically edited with three commentaries of the Bengal Vaiṣṇava School by Sushil Kumar De, (Dacca University Publication Series, No. 5), Published by the University of Dacca, 1938.

KS = *Kramasandarbhaḥ*, a commentary on *Śrīmadbhāgavatam*, edited by Rāmanārāyaṇa Vidyāratna, Radhāramaṇa Press, Murshidabad Berhampur.

KVS = *Kavīndra-vacana-samuccaya*, edited by F.W. Thomas, Bib. Ind., 1912

LBA = *Laghu-bhāgavatāmṛtam* of Rūpa Gosvāmin, edited by Balaicānda Gosvāmin and Atulakṛṣṇa Gosvāmin, Calcutta, 1304 B. S.

LM = *Lalitā-mādhavam* of Rūpa Gosvāmin, edited by Rāmanārāyaṇa Vidyāratna, Rādhāramaṇa Press, Murshidabad Berhampur.

LR = *Locana-rocanī*, a commentary of Jīva Gosvāmin on *Ujjvalanīlamaṇī* of Rūpa Gosvāmin (See UN).

PA = *Padyāvalī* compiled by Rūpa Gosvāmin, critically edited by Sushil Kumar De, Dacca University Oriental Publication Series, No 3, published by the University of Dacca, 1934.

PP = *Padma-purāṇam*, Anandāśrama Series, Bombay.

SA = *Stavāvalī* of Raghunātha Dāsa Gosvāmin, edited by Rāmanārāyaṇa Vidyāratna, Rādhāramaṇa Press, Murshidabad Berhampur.

SD = Śrīdhara-svāmin's commentary on *Śrīmadbhāgavatam* (See BP).

SM = *Smaraṇa-maṅgalam* of Rūpa Gosvāmin.

STM = *Stava-mālā* of Rūpa Gosvāmin, edited by Nityāsvarūpa Brahmacārin.

UN = *Ujjvalanīlmaṇī* of Rūpa Gosvāmin, edited by Mahāmahopādhyāya Durgāprasād and Laxman Śāstri Pansikar, with the commentaries, *Locanarocanī* and *Ānandacandrikā*, Kāvyamālā Series, No 95, Nirṇaysāgar Press, Bombay, 2nd edition, 1932.

US = *Uśanassaṃhitā.*

VM = *Vidagdha-mādhavam* of Rūpa Gosvāmin, edited with commentary by Bhavadatta Śāstrī and Kāsīnātha Pandurang Purab, Kāvyamālā Series, No. 81, Nirnaysagar Press, Bombay, 2nd edition.

VT = *Vaiṣṇava-toṣaṇī*, a commentary of Sanātana Gosvāmin on *Skanda* X of *Śrīmadbhāgavatam* edited by Rāmanārāyaṇa Vidyāratna, Rādhāramaṇa Press, Murshidabad Berhampur.

———

[1b]श्रीगुरवे नमः[1] । श्री कृ ष्ण[2] चै त न्य चन्द्राय नमः। श्री रू पा य नमः ।[3]

श्री चै त न्य मुखोद्गीर्णा हरेकृष्णेतिवर्णकाः ।
मज्जयन्तो जगत्प्रेम्णि विजयन्तां तदाह्वयाः ॥१॥[4]
आददानस्तृणं दन्तैरिदं याचे पुनः पुनः ।
श्रीमद् रू प पदाम्भोजधूलिः स्यां जन्मजन्मनि ॥२॥[5]

श्री कृ ष्ण चरणं नौमि शरणं मम सन्ततम् ।
हरणं सर्वदुःखानां स्मरणं यस्य तन्वपि ॥३॥
श्री मु कु न्द पदद्वन्द्वं कन्दमानन्दसन्ततेः ।
तनोतु मयि कारुण्यं स्वमात्रैकगतौ[6] सकृत् ॥४॥
10 स्वमनोद्रढिमैकार्थलाभायास्वाद्यते मया ।
श्री रू प कृतग्रन्थानां कोऽपि कोऽपि लवः स्फुटम् ॥५॥

तत्र लेख्यप्रतिज्ञा ।

प्रकाशनस्य चत्वारो वैलक्षण्यस्थितेरपि ।
भेदा निरसनस्येह साधनस्य तथैकशः ॥६॥
15 विरोधखण्डनं श्रैष्ठ्यं समर्थाया रतेः क्रमात् ।
प्रकाशनं दुरूहस्य निरासो विमतस्य च ॥७॥
वैलक्षण्यं द्वयो[7]रैक्यं गतयोर्भ्रान्तिजं मतम् ।
असत्यं[8] विमतं ज्ञेयं सदेव[9] मतमुच्यते ॥८॥

---

1 A श्रीराधाकृष्णाभ्यां नमः. C श्रीश्रीकृष्णचन्द्राय नमः.
2 C omits ०कृष्ण० adding श्री०.
3 ABC omit it.
4 LBA, p. 3.
5 MC, p. 241.
6 स्वमात्रं तत्पदद्वन्द्वमात्रं यथा स्यात्तथा । एका केवला अन्यवासनासम्भिन्ना गतिः प्राप्तिर्यस्य तादृशस्तस्मिन् ।
7 मतामतयोः ।
8 व्रजे यत्स्वीयात्वकल्पनं तदसत्यम् ।
9 सत्यमेव ।

वैलक्षण्यपदत्वेऽपि वैशद्याय पृथक्तया ।
तच्चतुष्टयतो लेख्यं साधनानां चतुष्टयम् ॥९॥
लेख्यं प्रथमतस्तत्र प्रकाशनचतुष्टयम् ।
स्वरूपगतमत्राद्यं महाभावगतं मतम् ॥१०॥
5 स्वभावभेदद्वयमाश्रितं परं
[2a] प्रकाशनं लेख्यमतो द्वितीयकम् ॥
ततस्तृतीयञ्च समञ्जसागतं
तथा समर्थागतमत्यपूर्वकम् ।
ततो विलेख्यन्तु चतुर्थमुन्नतं
10 कामानुगामार्गगतस्वरूपगम्[1] ॥११॥
ततो लेख्यं प्रयत्नेन वैलक्षण्यचतुष्टयम् ।
आदौ श्री व्र ज गो लो क गतमाद्यं ततः परम् ॥१२॥
परकीयाततेः का न्ता य नी व्रतपराततेः ।
वैलक्षण्यं रतिगतं द्वितीयमतिदुर्गमम् ॥१३॥
15 श्री कृ ष्ण लीलामत्स्यादिलीलागन्तु तृतीयकम् ।
तुर्यं साधकताटस्थ्ययुतरूपगतं ततः ॥१४॥
ततो लेख्यं निरसनचतुष्टयमनुक्रमात् ।
श्रीम द्गो कु ल तल्लीलान्यथाकल्पनमेव यत् ॥१५॥
तन्निरोधः पुरा लेख्य आद्यं निरसनं हि सः ।
20 श्री न न्द न न्द न स्यातो[2] म थु रा गमनं हि यत् ॥१६॥
तन्निषेधो द्वितीय वै लेख्यं निरसनं स्फुटम् ।
सोपानपञ्चकप्राप्तं तृतीयं तत्ततः परम् ॥१७॥
सोपानपञ्चकं स्पष्टं लिख्यतेऽनुक्रमेण तत् ।
रसज्ञेतरलोकैर्यत्कल्पितं केवलं न सत् ॥१८॥
25 यो ग मा या कृतस्याद्यं[3] नश्वरत्वादिवस्तुनः ।
वासोहरणलीलायां श्री रा धा ल लि ता दिषु ॥१९॥

---

1 AC ॰स्वरूपिगम्.
2 व्रजात् ।
3 सोपानम् । पञ्चसोपानस्य विवरणमाह योगमायेति ।

अनूढात्व[1]वादरूपं द्वितीयञ्च प्रकल्पितम् ।
परोढात्वाभिमानस्याभावरू[2b]पं त्रिकं ततः ॥२०॥
न व वृ न्दा व न स्थश्री रा धा स्थं प्रथमं हि तत् ।
कु रु क्षे त्र गतानां तत्तदादीनां द्वितीयकम् ॥२१॥
5 द न्त व क्रं निहत्य श्री कृ ष्णे श्री व्र ज मागते ।
तृतीयन्तु तदादीनां तदेवेति त्रिकं भवेत् ॥२२॥
यदप्रकटलीलायां स्वकीयात्वं[2] प्रकल्पितम् ।
खण्डनाय हि तस्यान्त्यं लेख्यं निरसनं ततः ॥२३॥
ततो लेख्यं प्रयत्नेन साधनानां चतुष्टयम् ।
10 रिरंसां कुर्वतां पुंसां न न्द न न्द न गामपि ॥२४॥
व्र ज लोकानुसारस्य सद्भावाभावमिश्रणैः ।
चातुर्विध्यात्साधकानां साधनानां चतुष्टयम् ॥२५॥
आद्यं रागानुगं वैधं द्वितीयं साधनं ततः ।
अन्तराद्यममिश्रं यद्बहिर्वैधसमन्वितम्[3] ॥२६॥
15 तृतीयं साधनं तद्धि चतुर्थं तु ततः परम् ।
अन्तराद्यं बहिर्वैधममिश्रं[4] न तु पूर्ववत् ॥२७॥

इति[5] ।

## तत्र[6] महाभावस्वरूपप्रकाशनम् ।

अङ्गिवृत्तिर्महाभावः समर्था त्वङ्गवृत्तिभाक् ।
20 अतोऽस्य लक्षणव्याख्या मया सङ्गृह्यतेऽग्रतः ॥२८॥

---

1 BC अनूढात्वे.

2 BC स्वकीयत्वं.

3 अन्तः सिद्धरूपे। आद्यं रागानुगम्। अमिश्रं बहिः साधकरूपे वैधीरागानुगयोर्मिलनं यत्तत्तृतीयसाधनं मथुराप्रापकम्।

4 अन्तः सिद्धरूपे। आद्यं रागानुगम्। बहिः साधकरूपे। वैधम्मिश्रं केवलं वैधं द्वारकाप्रापकम्। न तु मिश्रणम्।

5 C adds केवलैश्वर्यभावितमिति.

6 A अथ.

तल्लक्षणम्

अनुरागः स्वसंवेद्यदशां प्राप्य प्रकाशितः ।
यावदाश्रयवृत्तिश्चेद्भाव इत्यभिधीयते ॥२६॥[1]

इति ।

**अस्य स्वेच्छाकृत[2]व्याख्या सेव्यतेऽसौ मया सुधा ।**
**श्रीम ल्लो च न रो च न्यां तत्कृद्भिर्या [3a] सुसञ्चिता ॥३०॥**

अनुराग इति[3] प्रागुक्तानुरागो यावदाश्रयवृत्तिश्चेत्तर्हि स्वसंवेद्यदशां प्राप्य प्रकाशितो
5 भाव इत्यभिधीयत इत्यन्वयः । भावशब्दस्यात्रैव[4] वृत्तेः[5] परा काष्ठा भगवच्छब्दस्य
श्री कृ ष्ण इवेति भावः । महाभावशब्दस्य तु क्वचित्तत्र प्रयोगः स्वयम्भगवच्छब्दस्येव
ज्ञेयः[6] । यावदाश्रयमितीयत्तायामव्ययीभावो' यावत्पात्रं ब्राह्मणानामामन्त्रयस्वेतिवत् ।
आश्रयश्चात्र राग एव । तमाश्रित्यैवानुरागस्तादृशतां[7] प्राप्नोति ।

नवरागहिङ्गुलभरैश्चिलाय स्वयमन्वरञ्जयद्[8]

10 इत्युदाहरणेऽपि तथा मंस्यते वक्ष्यते च[9] ।

रागो[10]ऽनुरागतामादौ स्नेहः प्राप्यैव सत्वरम् ।
मानत्वं प्रणयत्वञ्च क्वचित्पश्चात्प्रपद्यते ॥३१॥
अत एव प्रबन्धेषु[11] श्रूयते रा धि का दिषु ।
पूर्वरागप्रसङ्गेऽपि प्रकटं रागलक्षणम् ॥३२॥[12]

---

1 UN. pp. 459-60. 2 BD ०कृता.

3 The whole passage here is an extract from the commentary, LR on UN, pp. 459-61, with slight variations indicated in the foot-notes.

4 LR, ०शब्दस्य तत्रैव.

5 C and LR, वृत्ति०.

6 LR here adds अयमर्थ.

7 महाभावताम् ।

8 UN, p. 461, reads the full verse: चिलाय स्वयमम्बरं जयदिह ब्रह्माण्डहर्म्योदरे । भूयोभिर्नवरागहिङ्गुलभरैः शृङ्गारकारुः कृती ॥ The Berhampur edition of UN, p. 764, reads स्वयमन्वरञ्जयद्० for स्वयमम्बरं जयद्०. LR, however, cites this verse as in the body.

9 AC omit च.

10 ABC रागा०. Though UN, p. 504 reads रागा०, LR, p. 504 explains it as रागः कर्तादौ प्रथमत एवोद्भूयानुरागतां प्राप्य स्नेहः सन्मानत्वं प्रणयत्वञ्च प्राप्नोति.

11 UN, p. 504 with अत एवात्र शास्त्रेषु for अत एव प्रबन्धेषु, and the reading found in LR, p. 460, corresponds to the former.

12 UN, p. 504. LR cites it at p. 460.

इति च। ततश्च यावदाश्रयमा[1]श्रयस्येयत्तापन्ना वृत्तिर्यत्र[2] स इत्यव्ययीभावगर्भबहु-
व्रीहित्वे यावती रागस्येयत्ता सम्भवति तावतीं तामापन्ना वृत्तिर्वर्तनं यस्येति गम्यते।
ततश्चायं[3] वाक्यार्थः। स्वसं[4]वेद्यदशां स्वस्य भावोन्मुखताप्राप्तानुरागवतस्तत्प्रेयसीजन-
विशेषस्यै[3b]व न तु केवलानुरागवतः[5] संवेद्या[6] या दशा तां[7] प्राप्य प्रकाशितः। यथा-
5 वसरमुद्दीप्तादिसात्त्विकैः प्रकाशमानश्चेद्भाव इत्यभिधीयत इति। अयं भावः। रागः खलु

दुःखमप्यधिकं चित्ते सुखत्वेनैव व्यज्यते[8]।
यतस्तु प्रणयोत्कर्षात्स राग इति कथ्यते ॥३३॥[9]

इत्युक्तलक्षणः। दुःखस्य च[10] परा काष्ठा कुलवधूनां स्वयमपि सु[11]मर्यादानां स्वजना-
र्य[12]पथाभ्यां भ्रंश एव नाग्न्यादिना[13] च मरणम्। ततश्च तत्तत्[14]कारितया[15]
10 प्रतीतोऽपि श्री कृ ष्ण सम्बन्धः सुखाय कल्पते चेत्तर्ह्येव रागस्य परमेयत्ता। ततश्च
तामाश्रित्यैव प्रवृत्तो[16]ऽनुरागो भावाय कल्पते। सा चारम्भत एव व्र ज दे वी ष्वेव
दृश्यते। पट्टमहिषीषु तु सम्भावयितुमपि न शक्यते। आरम्भत एव व्यञ्जयितुं नवराग-
हिङ्गुलभरैरित्यत्र नवशब्दो दास्यते[17]। तदेवमेव ता एवोद्दि श्यो द्ध वः सचमत्कारमाह

या दुस्त्यजं स्वजनमार्यपथञ्च हित्वा[18]

---

1 B omits आश्रयम्० and the omission corresponds to the text of LR.
2 AC and LR, ०र्यस्य.
3 LR, स चायं.
4 A स्वयं०.
5 A adds here रुक्मिण्यादेः. D explains : रुक्मिण्यादेः.
6 AC add स्व० before संवेद्या.
7 LR दशां for या दशा तां.
8 D रज्यते.
9 BD omit इति कथ्यते. UN, p. 443 with कीर्त्यते for कथ्यते, but LR reads the latter.
10 LR omits च.
11 LR, परम० for सु०.
12 ABD स्वजनवर्य०.
13 C नाग्न्यादिर्न.
14 LR, तत्० for तत्तत्०.
15 दुःखपराकाष्ठाकारितया (sic.) स्वजन-वर्यपथाभ्यां ध्वंसकारितया ६
16 Mss. प्रवर्तौ. LR, प्रवृत्तो०. for प्रवर्तौ०.
17 ABD दास्यते.
18 BP, X. 47. 61c. See *post*, I. 34.

इति । ईदृशोक्त्या च यद्यपि तासां तत्त्यागो न सम्भवति तथापि कृत इति कुलाङ्गनात्वं परमस[1]मर्यादत्वञ्च दर्शितम् ।[2]

तस्मात्समर्थाख्यैव रतिरनुरागदशामारूढा सती [4a] महाभावदशामाप्नोतीति महाभावसमर्था[3]रत्योः क्रमेणाङ्गिवृत्तित्वाङ्गवृत्तित्वे श्री कृ ष्ण र घु ना थ यो रिव कारणत्व[4]कारणवत्त्वे च प्राकट्ये । यथा श्री कृ ष्णे वि ष्णोः प्रवेशेन प्रविष्टावतारलीलावलित(?)[5]लीनस्य श्री कृ ष्ण स्य तल्लीलादृष्ट्या पश्चाद्भावित्वं तथा महाभावस्य । यथा र घु ना थ स्य पूर्वभावित्वं तथा समर्थाया रतेः । दृष्टान्तोऽयमेकांशेन । सर्वथा सादृश्येऽवतारलीलाया इव समर्थायाः कारणत्वहानेरपकर्षापाताच्च । कादाचित्कत्वेन प्रतीयमानत्वस्यापाताच्च[6] । यद्वा[7] पूर्वं

भक्तिखेदा ऽ च्यु ता ग्रज[8]

इति र घु ना थ स्य पूर्वभावित्वं न तावदवतारलीलागतम् । पूर्वत्र व्याख्यायां कारणवत्त्वं परत्र तुरीयत्वं र घु ना थ स्य[9] । यत एतदभावे[10] ब ल दे व-स्याग्रजत्वाभावः स्यात् । अत एव

एते चांशकलाः[11]

---

1 ABD °परमसु°.

2 LR on UN, pp. 459-61.

3 C समर्थं°.

4 C omits कारणत्व°.

5 It seems to be °लीलावली°.

6 C omits दृष्टान्तोऽयमेकांशेन °प्रतीयमानत्वस्यापाताच्च. D प्रतीयमानापाताच्च.

7 C यथा for यद्वा.

8 Cited in KS on BP, X. 1. 24.

9 पूर्वव्याख्यायां श्रीकृष्णस्य सर्वकारणकारणत्वेऽपि श्रीरघुनाथस्य कारणवत्त्वम् । परव्याख्यायामच्युताग्रजरघुनाथस्य कारणवत्त्वे तुरीयत्वम् । ईशस्य यत्त्रिभिर्हीनं तुरीयं तत्प्रचक्षते । चतुर्थत्वं रामलक्ष्मणभरतशत्रुघ्नत्वम् ।

10 रघुनाथस्य पूर्वभावित्वाभावे । यद्वा रघुनाथस्य तुरीयत्वाभावे बलदेवस्याग्रजत्वाभावः स्यात् ।

11 AC omit °कलाः. BP, I. 3. 28°. The full verse :

एते चांशकलाः पुंसः कृष्णस्तु भगवान्
स्वयम् ।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे ॥

इत्यादिना स्वयम्भगवत्त्वेन नन्दनन्दनस्यावतारावलीबीजत्वमद्भुतं[1] गोलोकनाथस्य तु नरलीलात्वाभावेन विरोधाभावात्स्पष्टमेतदिति। अत एव महाभावस्य काश्चिद्वृत्तयः समर्थायां रतौ वर्तन्ते। महाभावस्याङ्गिवृत्तित्वं

सर्वभावोद्गमोल्लासी मा[4b]दनोऽयं परात्परः[2]

5 इति वचनगम्यम्। कारणञ्च समर्थारतेः स्वरूपजत्वात्। महाभावस्य स्वरूपत्वं

महाभावस्वरूपेयम्[3]

इति वचनात्।

महाभावोज्ज्वलचिन्तारत्नोद्भावितविग्रहाम्[4]

10 इति वचनाच्च। चन्द्रावल्यादीनां रूढादिमहाभावस्वरूपत्वमाभ्यां वचनाभ्यां गम्यम्। अत एव महाभावस्य मनःस्वस्वरूपतानयनरूपाया वृत्तेः समर्थायामपि सद्भावात्। कादाचित्कं सम्भोगेच्छाभेदबोधकचेष्टाविशेषरूपं समञ्जसावृत्त्यन्तरं निरस्तम्[5]। वृत्तेः परमेयत्तामापन्नो राग एव महाभावस्योपादानकारणम्। यथा शर्करासितोपलाया[6] यथा मृद्घटस्य। यथा शर्करायाः सितोपलातो 15 दूरीकरणे सितोपलाया अभावो यथा घटतो मृदो दूरीकरणे घटस्याभावस्तथा परमेयत्तावृत्तिमापन्नस्यास्योपादानरूपस्य[7] रागस्य महाभावतो दूरीकरणे

---

1 प्रपञ्चगोचरागोचरे सदापूर्णतमैश्वर्यमाधुर्यधामलीलापरिकरसमयानन्यापेक्षासमोर्ध्वानिर्वचनीयसर्वकारणकारणत्वमद्भुतम्। तथा महाभावस्य कारणत्वमद्भुतम्।

2 UN, p. 499. The next line is: राजते ह्लादिनीसारो राधायामेव यः सदा.

3 UN, p. 73. The full verse is: तयोरप्युभयोर्मध्ये राधिका सर्वथाधिका। महाभावस्वरूपेयं गुणैरतिवरीयसी॥ The term उभय here means both राधा and चन्द्रावली.

4 SA, p. 268.

5 क्वचिद्भेदितसम्भोगतृष्णा सान्द्रा समञ्जसा (UN, p. 409) इति कादाचित्कं सम्भोगतृष्णाया अवशीकरणत्वस्वरूपं समञ्जसावृत्तिरूपं समर्थायां निरस्तम्।

6 शर्करासमुद्भवसितोपलायाः।

7 A omits °स्योपादानरूपस्य adding only. °स्य।

महाभावस्याभावः। महाभावस्याभावे राधिकादीनां स्वरूपाभावः। वृत्तेः परमेयत्तामापन्नस्यास्य रागस्य परममाहात्म्यमेतदाधाररूपाणां[1] व्रजदेवीनां चरणरेणुस्पृहया श्रीवृन्दाव[5a]नस्थानां गुल्मलतौषधीनां मध्ये किमपि जन्म वाञ्छता श्रीमदुद्धवेन प्रकटितम्। यथा श्री[2]दशमे

5 आसामहो चरणरेणुजुषामहं स्यां
वृन्दावने किमपि गुल्मलतौषधीनाम्।
या दुस्त्यजं स्वजनमार्यपथञ्च हित्वा
भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥३४॥[3]

इति। उपपतौ शृङ्गारस्य

अत्रैव परमोत्कर्षः शृङ्गारस्य प्रतिष्ठितः[4]

इत्यादिना च[5] परमोत्कर्षं प्रकटयद्भिः श्रीमद्[6]गोस्वामिपादैः

रागेणोल्लङ्घयन्धर्मं परकीयाबलार्थिना।
तदीयप्रेमवसति[7]र्बुधैरुपपतिः स्मृतः ॥३५॥[8]

इति लक्षितोपपतित्वहेतुरूपस्यास्यैव परमेयत्तापन्नवृत्तिमापन्नस्य रागस्य
15 माहात्म्यं दर्शितम्। पुनः[9] परकीयासु

रागोल्लासविलङ्घितार्यपदवी०[10]

---

1 AC insert श्री० after it.

2 C adds ०मद्०

3 BP, X. 47. 61.

4 UN, p. 14.

5 AB omit च.

6 A omits ०मद्. B ०ल० for ०मद्०...

7 परकीयाबलार्थिना । परकीया अबलाः स्त्रियस्ता एवार्थितुं लब्धुं शीलं यस्य तेन रागेण हेतुना धर्ममुल्लङ्घयन्नतिक्रामन्। तदीयानां परकीयाणां प्रेम्णो वसतिराश्रयः।

8 UN, p. 12.

9 B omits it.

10 UN, pp, 52-53. The full text is:
रागोल्लासविलङ्घितार्यपदवीविश्रान्तयोऽप्युद्धुर-
श्रद्धारज्यदरुन्धतीमुखसतीवृन्देन वन्द्येहिताः।
आरण्या अपि माधुरीपरिमलव्याक्षिप्तलक्ष्मीश्रिय-
स्तास्त्रैलोक्यविलक्षणा ददतु वः कृष्णस्य सख्यः सुखम् ॥

**इत्यादिना परमोत्कर्षं प्रकटयद्भिः श्री[1] गो स्वा मि पादैः**

रागेणैवार्पितात्मानो लोकयुग्मानपेक्षिणा ।
धर्मेणास्वीकृता यास्तु परकीया भवन्ति ताः ॥३६॥[2]

**इत्युक्तलक्षण[3]परकीयात्वहेतु[4]रूपस्यास्यैव परमेयत्तापन्नवृत्तिमापन्नस्य रागस्य परममाहात्म्यं दर्शितम् । महाभावस्य यावदाश्रयवृत्तित्वं यथा श्री द श मे**

क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः
कृ ष्णे क चैष पर[5b]मात्मनि रूढभावः ।
नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षा-
च्छ्रेयस्तनोत्यगदराज इवोपयुक्तः ॥३७॥[5]

**इति । अस्यार्थः । स्त्रियः श्री कृ ष्ण स्य[6] परमशक्तयो वनचरीः श्री[7] वृ न्दा व न चर्योऽत एव व्यभिचारदुष्टा इति व्यभिचारदुष्टमा[8]त्मानं मन्यमाना न तु दुष्टाः । शक्तिमतः[9] श्री कृ ष्ण स्य परमसुखैकहेतुव्यभिचारस्या-रु न्ध ती मुखसतीवृन्दवन्द्यत्वेन परमसतीत्वरूप[10]त्वाद्धर्मादिचतुर्वर्गतिर-स्कारि[11]पञ्चमपुरुषार्थसाररूपत्वाच्च । तन्मननं तु[12] रागस्य परमेय-त्तापन्नवृत्तेर्हेतुत्वात्परमप्रयोजकम् । तन्मननं क्वेति दुःखम[13]धिकाधिक-मायातम् । परमात्मनि[14] कृ ष्णे रूढभावः क्वेति महाभावस्य वरामृतस्व-रूपश्री[15]त्वेन तद्धेतुस्त[16]न्मननमेव । हेतुमतः[17] परमाधिक्यात्तेन[18] सह हेतो-**

1 B adds ०मद् after it, C omits श्री० altogether.
2 UN, p. 52. लोकयुग्मानपेक्षिनार्थादिहलोकपरलोकापेक्षारहितेन धर्मेनास्वीकृता अर्थाद्गुरुविप्राग्निसाक्षिपूर्वकविधानेन न स्वीकृताः.
3 AB इतिलक्षित०.
4 D omits हेतु.
5 BP, X. 47. 59.
6 ABD omit ०स्य.
7 AD omit श्री०.
8 AD ०दुष्टाम्०.
9 आद्या शक्तिमयी राधा मुकुन्दार्द्धाङ्गसङ्गतेत्यागमे । अत्र शक्तिमान्कृष्णः ।
10 B omits ०त्वरूपं.
11 AD ०तिरस्कार०.
12 B omits it.
13 BC add ०प्य०.
14 BC insert श्री०.
15 B omits ०श्री०.
16 ACD तद्धेतुत०.
17 महाभावस्य ।
18 हेतुमता महाभावेन ।

स्तादात्म्यप्राप्तेः सुखमधिकाधिकमायातम्। अत एव दुःखसुखयोः परस्पर-
विरोधात्क क्वेति। महाभावं विना कृष्णस्याधिकाधिकमाधुर्यातिशया-
स्वादनं न स्यादिति परमतत्त्वविदां श्रीव्रजदेवीनां वार्तास्तां
नन्वीश्वरोऽनुभजतोऽविदुषोऽपीत्यादि कैमुत्यम्[1]। अत एवात्रा[2]धिकाधिक-
5 दुःखस्याप्यधि[6a]काधिकसुखत्वात्परमेयत्तापन्न[3]वृत्तिमापन्नो राग एवोद्धवस्य परमविस्मयादिहेतुर्जातः। महाभाव एव श्रीव्रजदेवीनां
लक्ष्मीचयात्पट्टमहिषीचयादपि गुणरुपसौभाग्यादिभिः परमोत्कर्षे[4] हेतुः।
यथा श्रीवैष्णवतोषण्यां

वाञ्छन्ति यद्भवभियो मुनयो वयञ्च[5]

10 इति श्रीमदुद्धवसिद्धान्तरीत्या सर्वाधिकप्रेमवतीषु[6] तासु[7] युक्तमेव
तादृशत्व[8]मिति[9] श्रीकृष्णस्यापि गुणरुपादिभिः[10] परमोत्कर्षे हेतुत्वं
महाभावस्यैव प्रेमानुरुपवैशिष्ट्यप्रकाशस्य न्याय्यत्वात्[11]। किन्तु

इयमेव रतिः प्रौढा महाभावदशां व्रजेद्[12]

इति महाभावस्य समर्थोत्पन्नत्वम्।

15 ताराभिसारक चतुर्थनिशाशशाङ्क
कामाम्बुराशिपरिवर्द्धन देव तुभ्यम्।

---

1 नन्वनुभजतोऽविदुषो जनस्येश्वरः साक्षात् श्रेयस्तनोति। परमात्मविदां व्रजदेवीनां किमिति वक्तव्यमिति कैमुत्यम्।
2 C omits ०त्रा.
3 C omits ०पन्न०.
4 A ०कर्ष०.
5 BP X. 47. 58. See also VT.
6 लक्ष्मीगणमहिषीगणादधिकप्रेमवतीष्वित्यर्थः।
7 व्रजदेवीषु।
8 यथास्थायिकपरमेयत्तापन्नरागस्याधारत्वेन महाभावस्वरूपात्तेन लक्ष्मीचयामहिषीचयाद्गुणरूपसौभाग्यादिभिः परमोत्कर्षत्वेनोद्धवादिप्रार्थ्यमानचरणरेणुत्वं युक्तम्।
9 C adds अतः after it.
10 C inserts परम० after it.
11 ये यथा माम् (BG, IV. 11) इत्यादिना।
12 UN, p. 415.

अर्घो नमो भवतु मे सह तेन यूना
मिथ्यापवादवचसाप्यभिमानसिद्धिः ॥३८॥[1]

इत्यादि[2]षु प्रत्यक्तपरमेयत्तापन्नवृत्तिकस्य महाभावाश्रयरागस्यापि समर्थोत्पन्नत्वादत एवैकदा कारणत्वकारणवत्त्वाभ्यां महाभावस्य विरुद्धधर्मत्वम्।
5 श्री कृ ष्ण स्य यथैकदा सर्वकारणकारणत्वेन श्री व्र जे न्द्र स्यापि कारणत्वमागमाद्युक्तप्रामाण्येन नित्यतत्पुत्रत्वञ्च परस्परं विरुद्धम्। अत एव तर्कागोचरत्वेन महाभावस्य परममाहात्म्यमायातम्।

या रागपरमे[6b]यत्तापन्नवृत्तिसुचर्चिता।
सा लीलाविततिः सेव्या श्रीम द्रू प पदाश्रयैः ॥३९॥

10 अत्र प्रथमरत्यवकरनिरसनं जातम्[3]। इति स्वरूपचतुष्टयप्रकाशने महाभावस्वरूपप्रकाशनं प्रथमं सम्पूर्णम्[4] ॥

## अथ निसर्गस्वरूपस्वरूप[5]प्रकाशनम्।

स्वभावभेदरूपत्वाद्द्वयो[6]स्तु रतिबीजयोः।
स्वभावलक्षणव्याख्या क्रियते प्रथमं ततः ॥४०॥

15 स्वभावलक्षणम्।

बहिर्हेत्वनपेक्षी तु स्वभावोऽर्थः प्रकीर्तितः[7]।

बहिर्हेत्वनपेक्षीति नित्यप्रियाधिष्ठानकत्वात्[8]।

निसर्गश्च स्वरूपञ्चेत्येषोऽपि भवति द्विधा।[9]

---

1 PA, 179, p. 76. Here in the foot note is given कुर्मो for अर्घो as a different reading. ACD omit the last three lines.

2 BC insert ०पद्यादि०.

3 C omits अत्र० जातम्.

4 AB पूर्णम्. 5 C omits ०स्वरूप०.

6 व्रजसमञ्जसासमर्थयोः।

7 UN, p. 400.

8 नित्यप्रिया ० श्रीराधिका। नित्यप्रियाया-मधिष्ठानं यस्य सः। तस्य भावस्तस्मात्।

9 UN, p. 400.

तत्र निसर्गस्वरूपप्रकाशनम् ।

> निसर्गः सुदृढाभ्यासजन्यः संस्कार उच्यते ।
> तदुद्बोधस्य हेतुः स्याद्गुणरूपश्रुतिर्मनाक् ॥४१॥[1]

एषा[2] व्याख्या । निसर्गश्च स्वरूपञ्चेति द्वैविध्यं क्रमेण समञ्जसायाः समर्थाया रतेर्मूलत्वात् । समञ्जसाया अङ्गिवृत्तिरूपस्यानुरागस्य मनःस्वस्वरूपतानयनवृत्तेरभावात्तद[3]ङ्गवृत्तिरूपायां समञ्जसायां सा[4] वृत्तिर्नास्त्यैव । अनुरागस्याङ्गिवृत्तित्वम् ।

> आद्या प्रेमान्तिमान्तत्रानुरागान्तां समञ्जसा ।
> रतिर्भावान्तिमां सीमां समर्थैव [7a] प्रपद्यते ॥४२॥[5]

इति निर्द्धारादत्र प्रयोगो निसर्गो नानुरागः । अनुरागस्य मनःस्वस्वरूपत्वनयनवृत्त्यभावात्[6] । अतोऽनु[7]रागादर्शनेऽपि तत्संस्कारो निसर्गः । स च तस्याङ्गिवृत्तित्वेन परावस्थाभावात्तत्सातत्यरूपसुदृढाभ्यासजन्यः । अतः समञ्जसाया उपादानं निसर्गः । अत एव निसर्गस्य सान्द्रतमत्वाभावस्वभावात्तदुद्बोधे गुणरूपयोर्मनाक् श्रुतिरपेक्ष्यते । समञ्जसाया मनःस्वस्वरूपतानयनाभावतश्चित्तात्पृथक्त्वात्सान्द्रतमत्वाभावाच्च स्वप्राकट्यात्पूर्वं तत्र निलीय स्थितत्वम्[8] । तेन सुदृढाभ्यासजन्यः संस्कारो वासना मनाग्गुणरूपश्रवणोद्बुद्धा समञ्जसामाविर्भावयति । अत एव

---

1 UN, p. 400.

2 AC एतद्॰.

3 अनुरागस्य ।

4 मनःस्वस्वरूपतानयनरूपा वृत्तिः ।

5 UN, p. 505. उक्तानां भावानामाश्रयालम्बनं निश्चिनोति । आद्या साधारणी प्रेमैवान्तिमो यत्र तथाभूतां सीमां प्रपद्यते । तेन कुब्जादीनां रतिप्रेमाणौ द्वावेव स्थायिनौ । समञ्जसानुरागान्तामिति । तेन पट्टमहिषीणां रतिप्रेमस्नेहमानप्रणयरागानुरागाः सप्त स्थायिनः । समर्था भावान्तिमामिति । तेन व्रजदेवीनां रत्यादिभावान्ता अष्ट स्थायिनः ।

6 A ॰वृत्तेरभावात्.

7 B omits ॰ऽनु॰.

8 C omits समञ्जसाया मनः॰ स्थितत्वम्.

असुन्दरः सुन्दरशेखरो वा[1]

इत्यादिपद्य व्रजस्थानां कात्यायनीव्रतपराणां कन्यानां समञ्जसाया रतेराविर्भावकारणस्य निसर्गस्योदाहरणमिति ।[2]

अथ स्वरूपस्वरूपप्रकाशनम् ।

5 अजन्यस्तु[3] स्वतःसिद्धः स्वरूपं भाव इष्यते ।[4]

अस्य[5] व्याख्या । भावो महाभावः स्वरूपमिष्यते ।

महाभावस्वरूपेयम्[6]

इत्यादिः स्वतःसिद्ध इत्यङ्गिवृत्तित्वात् । अजन्य इति कारणत्वात्तस्मादङ्गिवृत्तेः कार[7b]णाच्च समर्था रतिराविर्भवति । तत्र[7] कासाञ्चिन्मनःस्वस्व-
10 रूपता[8]नयनाद्यङ्गिवृत्तिवृत्तीनां सद्भावः । अत्र[9] प्रयोगः[10] । स्वरूपं महाभावो महाभावस्य मनःस्वस्वरूपता[11]नयनवृत्तिसद्भावात् । अतः समर्थाया उपादानं स्वरूपम् । अत एव[12]

यावदाश्रयवृत्तिश्चेद्भाव इत्यभिधीयते [13]

इति लक्षणाद्यावदाश्रयवृत्तिं विना स्व[14]रूपस्यान्यथाभावः ।

15 स्वभावद्वयविज्ञाने रतिभेदौ सुदुर्गमौ ।
भवेतां सुगमौ तस्मात्तद्द्वयं लिखितं पुरा ॥४३॥

---

1 UN, p. 402. The rest of the verse is :
गुणैर्विहीनो गुणिनां वरो वा ।
द्वेषी मयि स्यात्करुणाम्बुधिर्वा
श्यामः स एवाद्यगतिर्ममायम् ॥

2 कात्यायनीव्रतपराणां गुणरूपश्रवणापेक्षा नास्ति । किन्तु सातत्यज्ञानोद्बुद्धसंस्कारोत्थतत्सुदृढाभ्यासः ।

3 अजन्य इत्युपादानान्तरीणनिमित्ताभावः ।

4 UN, p. 402. The rest of the verse is : एतत्तु कृष्णललनोभयनिष्ठतया द्विधा.

5 ACD omit it.

6 UN, p. 73. The rest is गुणैरति वरीयसी. It refers to *Rādhikā*.

7 BC अत.

8 C ०स्व०.

9 D तत.

10 अनुमानतर्कः ।

11 BCD ०स्व०.

12 C omits अत एव.

13 UN, p. 460.

14 A inserts another ०स्व०.

अत्र द्वितीयरत्यवकरनिरसनं जातम्[1]। इति प्रकाशनचतुष्टये निसर्गस्वरूपस्वरूप[2]प्रकाशनं द्वितीयं सम्पूर्णम्[3] ॥

## अथ समञ्जसासमर्थास्वरूपप्रकाशनम् ।

श्रीसमर्थाविवेकार्थमादौ वाच्या समञ्जसा ।
5 अतो लक्षणमेतस्याः पूर्वमेव विचार्यते ॥४४॥

समञ्जसालक्षणम् ।

पत्नीभावाभिमानात्मा गुणादिश्रवणादिजा ।
क्वचिद्भेदितसम्भोगतृष्णा सान्द्रा समञ्जसा ॥४५॥[4]

इति[5]। व्याख्या। पत्नीभावाभिमान आत्मा स्वरूपं यस्याः सेति। 10 मधुराख्याया रतेः समञ्जसेति जातिविशेषस्य स्वरूपलक्षणम्। अनेन लोकधर्म[8a]मर्यादापेक्षात्र दर्शिता। अतः समञ्जसेति लोकधर्मातिक्रमरूपासामञ्जस्याभावात्तन्नाङ्गीत्यनेन समर्थायामसामञ्जस्यमायातम्। पत्नीभावाभिमानात्मेति तदभिमानतिरस्कारेण समर्थाया या सदास्थितिस्तस्याः सदाभावो व्यक्तः। स्वरूपस्याभावे वस्त्वभावात्[6]। एका 15 सामान्या[7] रतिस्तत्तद्वृत्तिभेदैः समञ्जसासमर्थासाधारणीति वैशिष्ट्यं प्राप्नोति। वृत्तिभेदान्विना सामान्यायां रतौ तत्तद्वैशिष्ट्यं बीजरूपेण सदप्यप्रयोजकतया[8] नापेक्षितम्। पत्नीभावाभिमानात्मत्वादेव सान्द्रेति। सान्द्रत्व[9]रूपस्वरूपभूतगुणविशेषो न सान्द्रतमत्वमादरविशेषमयस्वभावेन समञ्जसायाः सङ्कोचापत्तेः। आदरविशेष[10]मयस्वभावो यथा श्री[11] द श मे

---

1 C omits अत्र द्वितीयरत्यवकरनिरसनं जातम्.
2 C omits the second ०स्वरूप०.
3 ABD पूर्णम्.
4 UN, p. 409.
5 ABC omit इति.
6 स्वरूपलक्षणस्योपपत्नीभावाभिमानात्मत्वाभावात्।
7 मधुराख्या।
8 यथारण्यस्थस्य दण्डस्य घटं प्रति स्वरूपयोग्यतायां सत्यामपि न तस्य फलोपधायकता तद्वत्।
9 A inserts ०स्व०.
10 A omits ०विशेष०.
11 C omits श्री०.

प्रत्युद्गमादरभयासनपादशौच-[1]
ताम्बूलविश्रमण[2]वीजनगन्धमाल्यैः ।
केशप्रसारशयनस्नपनोपहार्यै-
र्दासीशता अपि विभोर्विदधुः स्म दास्यम् ॥४६॥[3]

5 इति । अत एव कचिद्भेदितसम्भोगतृष्णेति कादाचित्कवृत्तिविशेषोऽस्यां मनःस्वस्वरूपतानयनरूपाया वृत्तेरभावात् । कचिद्रत्युद्दीपनाभावे सति रतिवृत्तीनामुदयभावान्मन[8b]सो वृत्तिः[4] सम्भोगतृष्णोदेति । अत एव गुणादिश्रवणादिजेति गुणादिश्रवणसापेक्षाविर्भावरूपावस्थाविशेषः । श्रीकृष्णे न्द्रियसुखेच्छारतिस्तदिन्द्रियाणां कामजक्षोभवैकल्य[5]मननं तदुद्दी-
10 पनम् । कचिद्वशित्वचेष्टानुमानेन[6] तदुद्दीपनाभावः[7] । तदा

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्[8]

इति न्यायात्कृष्णस्यापि वशित्वगुणोदयः किन्तु तत्[9]सौन्दर्यादिना मनोविक्षोभान्मनोवृत्तिः सम्भोगेच्छोदेति । सा[10] च प्रेमपरिपाटीतो भिन्नचेष्टा । तया चेष्टया स वशो न भवेत् । यथा ।

समञ्जसातः सम्भोगस्पृहाया भिन्नता यदा ।
15 तदा तदुत्थितैर्भावैर्वश्यता दुष्करा हरेः ॥४७॥[11]

तथा हि ।

स्मायावलोकलवदर्शितभावहारि-
भ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ।

---

1 All the MSS. read thus but BP, X. 61. 6 reads प्रत्युद्गमासनवरार्हणपादशौच॰. The latter is preferable, as the idea of *bhaya* indicated in the former reading does not suit well with the devotional cult of *dāsya*.

2 चरणसेवा ।

3 BP, X. 61. 6.

4 स्वसुखतात्पर्यवृत्तिः ।

5 ACD ॰वैकुल्य॰.

6 जितेन्द्रियत्वचेष्टानुमानेन ।

7 A ॰भावात्.

8 BG, IV. 11.

9 कृष्णस्य ।

10 सम्भोगेच्छा ।

11 UN, p. 411.

पत्न्यस्तु षोडशसहस्रमनङ्गबाणै-

र्यस्येन्द्रियं विमथितुं करणैर्न शेकुः ॥४८॥[1]

अत्रात्मारामशिरोमणित्वेन मुनिभिः कृतायाः स्तुतेः स्फूर्त्या वशित्व-चेष्टानुमानम्। किन्तु[2] समञ्जसायाः सान्द्रत्वेन तत्र प्रवेशोऽन्या[3]-
5 सामर्थ्यात्तरङ्गिन्यास्तरङ्गान्तरायमाणरविमरीचेरिव समञ्जसातः सम्भोगेच्छाया बहिःस्थितिः। अत एव कादाचित्क[9a]स्तस्या उदयः। यथैतत्पद्यान[4]न्तरम्।

इत्थं र मा प ति मवाप्य पतिं स्त्रियस्ता

ब्र ह्मा दयोऽपि न विदुः पदवीं यदीयाम्।

10 भेजुर्मुदाविरतमेधितयानुराग-

हासावलोकनवसङ्गमलालसाद्यम् ॥४६॥[5]

व्याख्या। पतिमिति शृङ्गारस्य परमोत्कर्षाभावः। उपपतावेव तस्य निर्णीतत्वात्। श्रीमहिषीणामनुरागेण यो हासोऽवलोकश्च ताभ्यां हेतुभूताभ्यां श्री कृ ष्ण स्य ताभिः समञ्जसारत्यङ्गिवृत्तिरूपानुरागवतीभिः
15 सह योऽनुरागविलासरूपत्वान्नवनवायमानः सङ्गमः। सङ्गस्य नवनवायमानत्वं यथा प्र थ मे

यद्यप्यसौ पार्श्वगतो रहोगत-

स्तथापि तस्याङ्घ्रियुगं नवं नवम्।

पदे पदे का विरमेत तत्पदा-

20 चलापि यं श्रीर्न जहाति कर्हिचित् ॥५०॥[6]

इति। तत्र लालसौ[7]त्सुक्यमादिर्यस्य विभ्रमकदम्बस्य तं ता भेजुः प्रापुरित्यर्थः। यद्वा तासामनुरागहासावलोकाभ्यां श्री कृ ष्णे यो नवसङ्गमलालसस्तस्माद्धेतोर्यं श्री कृ ष्णं ता भेजुर्वशीकृतवत्य इत्यर्थः। तत्[8]पूर्व-

---

1 BP, X. 61. 4.
2 D किञ्च.
3 सम्भोगेच्छाया इत्यर्थः।
4 C omits ०न०.
5 BP, X. 61. 5.
6 BP, I. 11. 34: It reads यच्छ्री० for यं श्री०; C यः श्री०.
7 C omits लालस०.
8 D तं० and explains as कृष्णम्.

पद्ये समञ्जसातः सम्भोगतृष्णायाः पृथक्तया तस्य[1] मनो विजयेन वशीकर्तुं न शेकुः। मुदा श्रीकृष्णस्य पूर्वमवश्यतादर्शनेन विषण्णतातिरोहितयाधुना [9b] वश्यत्वदर्शनेन जातया व्याप्त्येत्यर्थः[2]। किम्भूतया। अचिरतमेधितया। अनुरागजत्वादनुरागोदयस्य प्रायिकत्वाच्च। आसां[3]
5 श्रीकृष्णस्यात्मारामशिरोमणित्वस्यास्फूर्तिः प्रायिक्यनुरागस्य सान्द्रत्वात्। यथा तत्पूर्वं पद्यं

> गृहादनपगं वीक्ष्य राजपुत्र्यो ऽच्युतं स्थितम्।
> प्रेष्ठं न्यमंसतात्मानमतत्त्वविदः स्त्रियः ॥५१॥[4]

गृहादनपगमिति दुर्लभत्वाद्यभावान्नहि समर्थाया इवोत्कर्षः समञ्जसाया
10 इत्यायातम्। प्रेष्ठं पूर्णतमप्रियत्वं न्यमंस्यत। न तु वस्तुतः पूर्णतमप्रियत्वः स[5] किन्तु पूर्णप्रियत्वः। पूर्णतमप्रियत्वस्तु समर्थारतिमतीषु व्रजदेवीष्वेव। अत एवातत्त्वविद इत्यासामनुरागस्य सान्द्रतमत्वाभावात्कादाचित्कयात्मारामशिरोमणित्वस्फूर्त्तिः। श्रीकृष्णस्यात्मारामशिरोमणित्वगुणोदयस्य तस्याः स्फूर्त्तेः पश्चाद्भावित्वं न तु पूर्वभावित्वम्।[6] यथैतदनन्तरं

15
> चार्वब्जकोषवदनायतबाहुनेत्र-
> सप्रेमहासरसवीक्षितवल्गुजल्पैः[7]।
> सम्मोहिता भगवतो न मनो विजेतुं
> स्वैर्विभ्रमैः समशकन्वनिता विभूम्नः ॥५२॥[8]

तत्र सप्रेमहासेति पूर्वं श्रीकृष्णानुरागः स्पष्टः। [10a] पश्चात्तासाम[9]नु-
20 रागतः सम्भोगतृष्णाया वृत्तिप्रकाशेन भिन्नतानुसन्धानेनात्मारामशिरोमणित्वगुणोदयो जातः[10]। अत एव न मनो विजेतुं स्वैर्विभ्रमैः समशक-

---

1 कृष्णस्य।
2 D जातव्याप्त्या इत्यर्थः.
3 महिषीणाम्।
4 BP, X. 61. 2. It reads प्रेष्ठं न्यमंसत स्वं स्वं न तत्त्वविदः स्त्रियः.
5 कृष्णः।
6 प्रथमं तास्वात्मारामादिगुणानां स्फूर्तिः। पश्चात् श्रीकृष्णस्याप्यात्मारामशिरोमणित्वगुणोदयः।
7 C ॰जालैः.
8 BP, X. 61. 3.
9 महिषीणाम्।
10 तासां सम्बन्धे कृष्णस्येति यावत्।

न्निति। एवं पाण्डव[1] साहाय्यार्थं श्रीकृष्णस्य तदुपकण्ठे चिरं स्थितत्वाद्वशित्वचेष्टानुमानेन सम्भोगेच्छायाः पृथक्ता। यथा प्रथमे

उद्दामभावपिशुनामलवल्गुहास-
व्रीडावलोकनिहतो मदनोऽपि यासाम्।
5 सम्मुह्य चापमजहात्प्रमदोत्तमास्ता
यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः ॥५३॥[2]

इति। व्याख्या। यथा कश्चित्सुप्रतिष्ठितोऽपि[3] धनिविशेषः केनापि कारणेन धनहानौ सत्यां पूर्वतोऽप्यधिकधनित्वव्यञ्जनार्थं पूर्वतोऽप्याधिक्यभाजं परिच्छदं स्वीकरोति तद्वच्छ्रीकृष्णस्य वशित्वस्फूर्त्यानुरागवृत्तीनाम-
10 नुदयान्मनोवृत्तेः सम्भोगेच्छाया उदयात्पूर्वतोऽप्यधिकत्वेन प्रतीयमाना अनुरागचेष्टा अनुकृतवत्यः। श्रीकृष्णस्य प्रेमैकवश्यत्वस्वभावात्ताभिः कुहकरूपाभिश्चेष्टाभिर्वश्यता दुष्करा जाता। श्रीकृष्णस्य प्रेमैकवश्यत्व-स्वभावो यथा स्तवमालायां

प्रेमसम्पदयस्कान्त[10b]कृत कृष्णाय सन्नतः[4]

15 इति। उद्दामा पूर्वतोऽप्यधिको यो भावस्तस्य सूचकाभ्यां तच्चेष्टानु[5]रूप-हासव्रीडावलोकानुकारिभ्यामत एवामलत्वेन वल्गुत्वेन च प्रतीयमानाभ्यां हासव्रीडावलोकाभ्यां निहत इत्यादिकमेतयोश्चेष्टयोः प्रतीयमानाधिकज्ञापनं न तु वास्तवम्। किञ्च

सर्वविस्मारिगन्धा[6]

20 इति सर्ववि[7]स्मारणरूपसमर्थावृत्तेरभावात्समञ्जसायां

1 C पाण्डवे. D पाण्डवानां०.
2 BP, I. 11. 37 with ०निहतोऽमदनो० in *b*.
3 B omits ०ऽपि.
4 StM, p. 23. The first part of the verse is: लोकोत्तरचमत्कार-लीलामञ्जरिनिष्कुटः.
5 BC omit ०नु०.
6 UN, p. 412. The full text is: समर्था सर्वविस्मारिगन्धा सान्द्रतमा मता.
7 D omits ०वि०.

ता नाविदन्मय्यनुषङ्गबद्ध-
धियः स्वमात्मानमदस्तथेदम्[1]

इतिवत्सर्वविस्मारणं नास्ति । अतः कचित्कचिदैश्वर्यज्ञानमुदेति । तदा

सञ्जायमानादरगौरवेण
5 तत्प्रेमहान्या स्वमनो न तृप्येद्[2]

इतिवत्प्रेमह्रासो जायत इति ।

श्रीलां[3] समञ्जसां स्तौमि रतिं यस्या विवेचनात् ।
सुदुर्गमं समर्थायाः स्वरूपं सुगमं भवेत् ॥५४॥

इति समञ्जसास्वरूपप्रकाशनम् ।[4]

10 यस्याः स्वरूपज्ञानेन सर्वसिद्धान्तसन्ततिः ।
सुगमा स्याद्दुरूहापि श्रीसमर्थां नमामि ताम् ॥५५॥

अथ समर्थास्वरूपप्रकाशनम् ।[5]

समर्था खलु सैव स्याद्या लोकं धर्मञ्चातिक्रम्य परमकाष्ठामापन्नां पुष्टिमाप्नोति[6] । अत्र[7] व्यतिरेकप्रदर्शन[ ] [a]म् । एतद्[8]भावे लोकधर्ममर्यादा-
15 पेक्षारूपसामञ्जस्यात्समञ्जसेति ।

---

1 BP, XI. 12. 12. The rest of the verse is: यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे ।

2 BBA, II. 4. 113. D comments गोपकुमारवाक्यमेतत.

3 श्री शोभा । तां लाति ददातीति श्रीला । ताम् ।

4 D adds after it अथ समर्थास्वरूप-प्रकाशनम्.

5 ABC insert it here, but D gives it prior to the verse numbered and omits here

6 पोषयति ।

7 कारिकायाम् ।

8 समर्थायाः ।

क[1]श्चिद्विशेषमा[2]यान्त्या सम्भोगेच्छा ययाभितः ।
रत्या[3] तादात्म्यमापन्ना सा समर्थेति भण्यते ॥५६॥
स्वःवरूपात्तदीयाद्वा जाता यत्किञ्चिदन्वयात् ।
समर्था सर्वविस्मारिगन्धा सान्द्रतमा मता ॥५७॥[4]

5 व्याख्या। क[5]श्चिद्विशेषमुपपतेर्विषयत्वात्परकीयाणामाश्रयत्वाच्च। अत एव वैशिष्ट्यं[6] पात्रवैशिष्ट्याद्रतिरेषोपगच्छतीति न्यायाच्च। अत एव सम्भोगेच्छा रतितादात्म्यरतिसान्द्रतमत्वसर्वविस्मारिगन्धत्वस्वरूपोत्पन्नत्वासिंद्धानुसन्धानरहिता। तज्ज्ञाभिमतरतिद्वयगताभिमानसालक्षण्यनिरासकनिमित्तस्य तद्वैलक्षण्यनैमित्तिकावश्यकोत्पादकत्वाच्च।[7] समञ्जसास्वरूपभूत-
10 पत्यभिमानव्यतिरेकप्राप्यत्वाच्च। पत्नीभावेनैव का त्या य नी व्रतपरकन्यानां स्वकीयत्वात्। परकीयासु कन्यासु किमुत परोढास्ववश्यापेक्ष्यत्वाच्च[8] स्वरूपनिष्पादकसामर्थ्यात्मकभावसम्भावनौपयिकत्वाच्च[9]। प द्या व ल्या म्[10]

असमञ्जसमसमञ्जसमसञ्जसमेतदापतितम् ।[11]
बल्लवकुमारबुद्धया हरिहरिहरिरीक्षितः कुतुकाद् ॥५८॥[12]

इति प्रथमपुरु[11b]षार्थ[13]विरुद्धायमानासमञ्जसरूपत्वाच्च। महाभावाश्रयपर-
15 मेयत्तापन्नवृत्तिवलितरागमूलत्वाच्चोपपत्नीभावाभिमानरूपमिति। मधुराख्याया रतेः समर्थेतिजातिविशेषस्य स्वरूपलक्षणम्। अत एव लोकमर्यादातिरस्काररूपस्वभावश्चेति स्वभावलक्षणञ्च। एतैरविनाभावेन स्वसिद्धये समर्थाया उप-

1 UN, p. 412, reads कि॰.
2 कश्चिद्विशेषमुपपत्नीभावाभिमानम् ।
3 रत्या सह ।
4 UN, p. 412.
5 C कि॰.
6 B inserts here पात्रवैशिष्ट्यम्.
7 तस्याः समञ्जसाया वैलक्षण्यरूपायाः समर्थायाः स्वरूपस्य नैमित्तिकरूपा या तस्या आवश्यकोत्पादकत्वाच्च ।
8 समर्थाया इति यावत् ।
9 उत्पादनयोग्यत्वात् ।
10 ACD omit it.
11 लोकधर्ममर्यादात्यागरूपमिति त्रिविधमसमञ्जसम् ।
12 PA, 168; p. 72. BCD omit the second line.
13 धर्म इत्यर्थः ।

पत्नीभावाभिमानात्मत्वमाक्षिप्यते। अतो हेतुत्वमे[1]षामेवमन्यत्रापि[2] ज्ञेयम्। विशेषमित्यत्र व्यतिरेकप्रदर्शनमेतदभावे[3] सामान्येति । कश्चिदित्यत्र व्यतिरेकप्रदर्शनम्। एतदभावे[4] पत्नीभावाभिमानात्मेत्यभिमानभेदस्यैव रतिभेदहेतुत्वात्। विशेषकथनेन मधुररतिसामान्यत्वपरिहारः स्वत एव जातः। 5 यथा विप्रत्वादिविशेषकथनेन वर्णसामान्यत्वपरिहारः स्वत एव स्यात्। कश्चिदिति रहस्यतया कथनं बहिरङ्गजनाज्ञेयस्वरूपत्वप्रतिपादनाय। आलम्बनादिवैशिष्ट्येन स्वरूपस्य विज्ञविज्ञेयत्वमेव। स्वरूपज्ञानाभावे सति साधकैस्तदनुसारस्य[5] दुष्करत्वात्सुसारस्यैव[6] ग्रन्थप्रयोजनरूपत्वाच्च। यथा रत्यादिषु [12a] प्रेमस्नेहादयो बीजरूपेण सन्तोऽपि तत्तद्वृत्तिभेदप्राकट्यं विना तत्त[7]त्तया नाभिधीयन्ते। तथा समर्था रतिः सामान्यायामवस्थायां[8] पूर्वं बीजरूपेण सत्यपि समर्थात्वेन नाभिधीयते किन्तु सामान्यत्वेनेति सामान्यरूपतया[9]। अत्र व्यतिरेकप्रदर्शनम्। स्वरूपस्य समर्थाबीजसामान्यावस्थायां[10] लीनत्वेन स्थितत्वात्समर्थाबीजसामान्यावस्थाभावे समञ्जसाबीजसामान्यावस्था[11]। निसर्गस्य सामान्यावस्थायामस्यां 15 समञ्जसाबीजरूपायां लीनत्वेन स्थितत्वात्। व्यतिरेकविशेषे दोषमाह। उपपत्नीभावाभिमानात्पूर्वं रतिवैशिष्ट्ये समञ्जसात्वापात इति पर-[12]कीयाणां कन्यानां परोढात्वस्याभावेऽपि यद्रतिवैशिष्ट्येन समर्थारतिप्रायत्वं तत्तु लीलाशक्तिवैभवविशेषमयमिति। अभितस्तादात्म्यमापन्नेत्यत्र व्यतिरेकप्रदर्शनम्। एतदभावे क्वचिद्भेदितसम्भोगतृष्णेति रत्या सहाभित-

---

1 D inserts here ॰ते॰ and explains: एतेषामुपपतित्वादीनाम्

2 ABC ॰मन्यत्र. पूर्वोक्तानां विशेषणार्थानामुपपतित्वादीनामन्यत्र परकीयासु कन्यास्वेवं ज्ञेयम्।

3 समर्थरत्यभावे।

4 उपपत्नीत्वाभिमानाभावे।

5 समर्थाया अनुसरणस्य।

6 D ॰सरस्य॰.

7 A omits ॰त्त॰. D explains प्रेमस्नेहादितया.

8 बालिकावस्थायाम्।

9 न तु विशेषपरोढ़तया।

10 बाल्यावस्थायाम्।

11 स्यादित्यन्वयः।

12 ननूपपतित्वाभिमानं विना समर्थाया सामान्यावस्थोक्ता चेत्तदा परकीयाणां कन्यानां प्रायःसमर्थेति संज्ञा कथं जाता। प्रायःसामान्येति कथं नोक्तेत्यत आह परेति समाधानम्।

स्तादात्म्याप्तेर्योग्यतायोग्यताभ्यां सम्भोगेच्छयोर्वैलक्षण्येन तयोर्मूल-
भूतयोः समर्थासमञ्जसयोर्वैलक्षण्यमायातम्। सम्भोगेच्छयोः स्वस्व-
रूपता[12b]दात्म्यप्रापणयोग्यतायोग्यताभ्यां सुतरामेव समर्थासमञ्जसयो-
र्वैलक्षण्यम्। समञ्जसासमर्थयोः सम्भोगेच्छयोर्हेतुत्वेन साधारण्याः[1]
5 सम्भोगेच्छाहेतुकत्वेन वैलक्षण्यं स्पष्टमेव सम्भोगेच्छेति[2]। एतद्वैलक्षण्या-
भावे शान्तादीनामापातात्। स्वस्वरूपात्तदीयाद्वा जाता यत्किञ्चिदन्वयादि[3]-
त्यत्र व्यतिरेकप्रदर्शनमेतदभावे गुणादिश्रवणादिजेति। सर्वविस्मारिगन्धे-
त्यत्र व्यतिरेकप्रदर्शनमेतदभावेऽन्तरान्तरा प्रेमापकर्षकैशर्यज्ञानमुदेतीत्यूह्यम्।
सान्द्रतमेत्यत्र व्यतिरेकप्रदर्शनमेतदभावे सान्द्रेति सान्द्रतरत्वस्याप्रयोगात्।
10 अत्र[4] सम्भोगेच्छाया रत्यास्तादात्म्या[5]पन्नत्वेन

सम्भोगेच्छाविशेषोऽस्या[6] रतेर्जातु न भिद्यते[7]

इत्यत्रोक्तस्य बहिःकादाचित्कचेष्टाभेदोदयहेतुभावान्तरास्पर्शित्वस्य हेतुः
कश्चिद्विशेष[8] एव। सान्द्रतमत्वस्य हेतूरत्या सम्भोगेच्छायास्तादात्म्या[9]-
पन्नत्वम्। सर्वविस्मारिगन्धस्य हेतुः सान्द्रतमत्वम्। स्वस्वरूपादित्या-
15 दिना स्वस्वरूपजातत्वस्य हेतुः।

सम्भो[13a]गेच्छाविशेषोऽस्या रतेर्जातु न भिद्यते[10]

इति बहिर्भावान्तरास्पर्शित्वेन रतेश्चित्तादपार्थक्यं सर्वविस्मारिगन्धत्वञ्च। अत्र
कारिकायां[11] व्यतिरेकप्रदर्शनम्। एतदभावे[12] पूर्वोक्तस्य[13] तस्य[14] तस्य[15]

---

1 रतेः। *Cf.*
नातिसान्द्रा हरेः प्रायः
साक्षाद्दर्शनसम्भवा।
सम्भोगेच्छानिदानेयं
रतिः साधारणी मता॥
असान्द्रत्वाद्रतेरस्याः
सम्भोगेच्छा विभिद्यते।
एतस्या ह्रासतो ह्रास-
स्तद्धेतुत्वाद्रतेरपि॥ (UN, p. 408)

2 ननु सम्भोगेच्छाशब्दप्रयोगेण किं प्रयोजनं प्रीतिशब्दवाच्यं कथं न स्यात्तत्राह।

3 See *ante* verse 57, p. 20.

4 समर्थायाम्।

5 MSS. ०त्म्या०।

6 समर्थायाः।

7 UN, p. 413.

8 उपपत्नीभावाभिमानः।

9 MSS. ०त्म्या०।

10 UN, p. 413.

11 समर्था सर्वविस्मारीत्यादौ।

12 कारिकार्थाभावे।

13 समञ्जसापरवृत्तिविशेषस्य।

14 भावान्तरस्पर्शित्वस्य।

15 समञ्जसागतपूर्वकारिकावर्गस्य।

समर्थास्वरूपवृत्तिव्यतिरेकप्राप्तस्यै[1]वं[2] हेतुहेतुमत्त्वमिति ।[3] समर्थाया उदाहरणं

प्रेक्ष्याशेषे जगति मधुरां स्वां वधूं शङ्कया ते
तस्याः पार्श्वे गुरुभिरभितस्त्वत्प्रसङ्गो न्यवारि ।
5 श्रुत्वा दूरे तदपि भवतः सा तुलाकोटि[4]नादं
हा कृष्णेत्यच्युतचरमपि व्याहरन्त्युन्मदासीत् ॥५६॥[5]

इति । व्याख्या । अत्रोन्मदेत्यनेन सेत्यनेन च[6] स्वरूपवैशिष्ट्यमत्पात्रवैशिष्ट्याच्च मधुरा रतिरुद्दिष्टा । स्वरूपवैशिष्ट्यन्तून्मादवैशिष्ट्यं ज्ञाप्यं पात्रवैशिष्ट्येन समर्थितञ्च । पात्रवैशिष्ट्यन्तु स्वरूपवैशिष्ट्येन समर्थितम् ।
10 अत्र व्यतिरेकप्रदर्शनमेतद्वैशिष्ट्याप्रकाशात्सामान्या रतिः । यथा

वालिकेयं त्रिवर्षीया वर्षीयसि समीक्ष्यताम् ।
या पुरः कृष्णमालोक्य हुङ्कुर्वत्यभिधावति ॥६०॥[7]

इति । रतिर्लीनवृत्तितया क्वचिदनुगृहीतलीलाशक्तिः पूर्वरागरूप[8]स्य विप्रलम्भ[9]भेदस्य हेतुः स्यात् । [13b] लीलाशक्तिर्जन्मादिलीलां बाल्यञ्च ।
15 बाल्ये रतेः सामान्यरूपं बाल्यान्ते वैशिष्ट्यञ्च प्रकटय्य पूर्वरागं प्रकटयति । धर्मिकैशोरमहाभावयोः[10] क्रमेण बाल्यपौगण्डत्वे सामान्यादिरतित्वे प्रकार उक्तः । स्वां वधूमिति समर्थाया निमित्तं परोढात्वम् । तत्रापि[11] हा-

---

1 समञ्जसालक्षणस्य ।

2 A ०स्यैव.

3 बहिः कादाचित्कचेष्टाभेदोदयहेतुभावान्तरस्पर्शित्वस्य हेतुः पत्नीभावाभिमानत्वम् । रतेर्भावान्तरस्पर्शित्वं सान्द्रत्वमन्तरान्तरैश्वर्यानुसन्धानं गुणादिश्रवणस्यापेक्ष्यत्वम् ।

4 तुलाकोटिर्नूपुरम् ।

5 UN, p. 413.

6 AD omit it.

7 BRS, p. 285, त्रिवर्षा वालिका सेयं० for वालिकेयं त्रिवर्षीया. It is to be noted that Śrījīva in his DS on BRS (*loc. cit.*) disapproves the reading त्रिवर्षीया citing reasons for it.

8 B ०स्वरूप१, D omits ०रूप०.

9 A inserts ०प्र०.

10 श्रीकृष्णराधिकयोः. *cf.* BRS (K), p. 19, and UN, p. 73.

11 परोढात्वेऽपि ।

कृ ष्णे ति व्याहरन्तीति परोढात्वेन पात्रवैशिष्ट्यान्मूलनामोच्चारणेनोपपत्नी-भावाभिमानवैशिष्ट्योदयात्। ततो लोकधर्मा[1]तिक्रमिस्वभावोदयाच्च। लोकधर्मावतिक्रम्य स्वलेशमात्रेण सर्वं विस्मार्य च परि[2]पुष्टिमापन्नेति समर्थात्वं दर्शितम्। अत्र व्यतिरेकप्रदर्शनमेतदभावे[3]

5 धीरा पतिं कुलवती न वृणीत कन्या

काले[4]

इति

तन्मे भवान्खलु वृतः पतिरङ्ग जायां

मात्मार्पितश्च भवतोऽत्र विभो विधेहि ।[5]

10 इति

ग दा ग्र ज एत्य पाणिं गृह्णातु मे[6]

इत्यादिषु[7] पद्येषु कन्यात्वेन परोढात्वाभावात्पात्रवैशिष्ट्यम्। ग दा ग्र ज इति पत्नीभावाभिमानोदयान्मूलनामग्रहणाभावः। पतिर्वृत इति पत्नीभावाभिमानोदयः। जायां विधेहीति पाणिं गृह्णात्विति च लोकधर्मापेक्षा।

15 अतः समञ्जसात्वमिति[8]। अत्र[9] चानुल्लेखाद[14a]नया रत्या[10] सम्भोगेच्छायास्तादात्म्यापन्नत्वमपि गम्यते। अतो बहिरपि भावान्तरास्पर्शित्वञ्च स्पष्टम्। समर्थाया महाभावोदाहरणे परोढात्वं निमित्तं प्रकटं दर्शितं

गोपवध्वः[11]

20 इति। बहिरपि भावान्तरास्पर्शित्वम्। यथा वि द ग्ध मा ध वे

---

1 BCD add ०च०.

2 D omits परि०.

3 उदाहरणस्याभावे।

4 BP, X. 52. 38. The remaining words are नृसिंह नरलोकमनोऽभिरामम्.

5 BP, X. 52. 39.

6 BP, X. 52. 40.

7 AB omit ०षु०.

8 व्यतिरेकप्रदर्शनम्।

9 प्रेद्वयाशेषे (UN, p. 413) इत्यादौ समर्थाया उदाहरणे।

10 समर्थया।

11 BP. X. 47. 58. The full verse is:

एताः परं तनुभृतो भुवि गोपवध्वो

गोविन्द एव निखिलात्मनि रूढभावाः।

धरिअ पडिच्छन्दगुणं सुन्दर
मम मन्दिरे तुमं वससि ।
तह तह रुन्धसि वलिअं
जह जह चइआ पलाएमि ॥६१॥[1]

5 इत्यत्र रुणत्सीति बलवदिति चकितेति पलाय इति बहिः सम्भोगेच्छा-स्पर्शित्वम् । सम्भोगेच्छायास्तादात्म्या[2]पन्नत्वाभावे

श्रुत्वा गुणान्भुवनसुन्दर शृण्वतान्ते
निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम् ।
रूपं दृशां दृशिमतामखिलार्थलाभ-
10 न्त्वय्य च्यु ता विशति चित्तमपत्रपं मे ॥६२॥[3]

इत्यत्र चित्तमपत्रपमित्यनेन त्वय्याविशतीत्यनेन च बहिः सम्भोगेच्छा-स्पर्शित्वमिति ।

तुलाकोटिनादं श्रुत्वा[4]

इति तदीययत्किञ्चिदन्वयोत्थत्वं[5] व्यक्तम् । अत्र[6] व्यतिरेकप्रदर्शनम् । एतद-
15 भावे श्रुत्वा गुणान्भुवनसुन्दरेत्यादिना गुणरूपश्रवणोत्पन्नत्वमिति स्वस्वरूपो-त्थत्वञ्चान्यस्या[7]स्तच्छ्रवणे[8] सा[9] ना[14b]सीदिति क्रोडीकृतम् । यत्किञ्चि-दन्वयं विनापि स्वस्वरूपोत्थत्वं यथा

---

वाञ्छन्ति यद्भवभियो मुनयो वयञ्च
किं ब्रह्मजन्मभिरनन्तकथारसस्य ॥

1 VM, II. 33. The Sanskrit rendering of this Prakrit verse is as follows:

धृत्वा प्रतिच्छन्दगुणं सुन्दर
मम मन्दिरे त्वं वससि ।
तथा तथा रुणत्सि बलितं
यथा यथा चकिता पलाये ॥

2 ABCD ०त्म्यमा०.

3 BP, X. 52. 37.

4 UN, p. 413, The order of the text here is:
श्रुत्वा दूरे तदपि भवतः सा तुलाकोटि-नादम्.

5 A omits ०त्व०. D explains it as समर्थात्वम्.

6 समर्थायाम् ।

7 व्रजस्थायाः नायिकायाः ।

8 तुलाकोटिनादश्रवणे.

9 समर्था ।

जिहीते यः कर्त्तां क्वचिदलमदृष्टा श्रुतचर-
स्त्रिलोक्यामस्तीति क्षणमपि न सम्भावनमयीम् ।
घन श्या मं पी ता म्ब र महह सङ्कल्पयदमुं
जनं कश्चिद्गोष्ठे सखि मम वृथा दीर्यति मनः ॥६३॥[1]

5 इति। वृथा दीर्यति मन इति त्रिलोक्यामस्तीति सम्भावनाभावात्स्वस्य परोढात्वेन निजाभीष्टस्य दुर्घटत्वाच्च। अत्र[2] व्यतिरेकप्रदर्शनमेतदभावे

असुन्दरः सुन्दरशेखरो वा
गुणैर्विहीनो गुणिनां वरो वा ।
द्वेषो मयि स्यात्करुणाम्बुधिर्वा
10 श्या मः स एवाद्य गतिर्ममायम् ॥६४॥[3]

इति श्या म त्वज्ञानोद्बुद्धसंस्कारोत्थत्वमिति। तत्र[4] स्वरूप[5]लक्षणं यथा

अजन्यस्तु स्वतःसिद्धः स्वरूपं भाव इष्यते[6]

इति। द्वितीयप्रकाशने[7] महाभावस्य समर्थाकरणत्वेन स्वरूपलक्षणं व्याख्यातम्। अधुना तु समर्थाया महाभावकारणत्वेन तस्य[8] तन्त्रेण
15 व्याख्या। अजन्य इत्युपादानान्तरीणनिमित्ताभावः।[9] अत्र व्यतिरेकप्रदर्शनम्। एतदभावे निसर्गः [15a] सुदृढाभ्यासजन्य इति निसर्गस्य जन्यत्वेन सोपादानत्वं सुदृढाभ्यास इत्यन्तरीणनिमित्तोत्थत्वञ्च। स्वतःसिद्ध इति बाह्यनिमित्ताभावः। अन्तरीणबाह्ये निमित्ते नित्यं मिथःसापेक्षे। अतो द्वयो[10]रपि निराकरणम्। अत्र व्यतिरेकप्रदर्शनम्। एतदभावे

---

1 UN, p. 405.

2 स्वरूपोत्थत्वे।

3 UN, p. 402.

4 BC अत्र.

5 C स्वरूपं॰ and omits ॰लक्षणं॰ after it.

6 UN, p. 402.

7 स्वरूपनिसर्गयोर्वर्णने।

8 स्वभावभेदस्वरूपलक्षणस्य।

9 यथा घटे मृदो गुणविशेषोऽन्तरीणनिमित्तमस्ति, तद्विना मृन्मात्रेण घटो न स्यात्तथा निसर्गेऽन्तरीणोपादाननिमित्तरूपसुदृढाभ्यासोऽस्ति, तद्विना गुणादिश्रवणेन निसर्गो न स्यात्।

10 अन्तरीणनिमित्तबाह्यनिमित्तयोर्निसर्गसुदृढाभ्यासयोः।

तदुद्बोधस्य हेतुः स्याद्गुणरूपश्रुतिर्मनाक्[1]

इति निसर्गस्योद्बोधे[2] मनाग्बाह्यनिमित्तापेक्षितत्वमिति। भावो महाभावस्या[3]ङ्गरूपत्वात्समर्था रतिः। अत्र व्यतिरेकप्रदर्शनमेतदभावे संस्कार इति। भावः साध्यरूपः संस्कारस्तु साधनरूप इति भेदः। निसर्गस्य बाह्योपादानाभावात्स्वभावभेदत्वम्। सुदृढाभ्यासस्य तु तन्निमित्तत्वम्[4]। समञ्जसायास्तदुपादानत्वम्। समञ्जसाया[5] मनःस्वस्वरूपता[6]नयनाभावेन[7] चित्ततः पृथक्त्वात्सान्द्रतमत्वाभावाच्च स्वप्राकट्यात्पूर्वं चित्ते निलीय स्थितत्वम्। तेन तदुपादानः[8] संस्कारस्तामा[9]विर्भावयति। समर्थायास्तु मनःस्वरूपता[10]नयनवृत्तेः सद्भावेन चित्ततोऽपृथक्त्वात्सान्द्रतम[15b]त्वाच्च चित्ते[11] न निलीय स्थितत्वं केवलं लीनवृत्तितया स्थितत्वम्। अत एव स्वरूपमे[12]व तामा[13]विर्भावयति। समर्थाया बहिरपि भावान्तरास्पर्शित्वात्कदाचिदपि सम्भोगेच्छाभेदहेतुकश्चे[14]ष्टाभेदो न जायते[15]। यथा

यत्ते सुजातचरणाम्बुरुहं स्तनेषु
भीताः शनैः प्रिय दधीमहि कर्कशेषु।
तेनाटवीमटसि तद्व्यथते न किं स्वित्
कूर्पादिभि[16]र्भ्रमति धीर्भवदायुषां नः ॥६५॥[17]

इति। व्यतिरेकमाह। समञ्जसायास्तु बहिर्भावान्तरस्पर्शित्वात्सम्भोगेच्छाभेदहेतुकश्चे[18]ष्टाभेदो जायते। यथा

---

1 UN, p. 401.
2 B adds ०न०.
3 BC omit ०स्य०.
4 संस्कारस्य निमित्तत्वम्।
5 C adds खलु.
6 ABC omit ०ता०.
7 कृष्णसुखायत्वाभावेन।
8 समञ्जसोपादानः।
9 समञ्जसाम्।
10 ABC omit ०ता०.
11 स्वप्राकट्यात्पूर्वम्।
12 महाभावः।
13 समर्थाम्।
14 AB ०कचे०
15 सम्भोगेच्छायास्तादात्म्यप्रापणात्तस्याश्चेष्टाभेदः समर्थायां न जायते।
16 शिलकणतृणाङ्कुरकण्टकादिभिः।
17 BP, X. 31. 19.
18 AB ०कचे०.

स्मायावलोक[1]

इत्यादि। समञ्जसायां सम्भोगेच्छा लीनवृत्तितया तिष्ठति न तु समर्थाया-
मिव तादात्म्यमापन्ना। अत एव रत्युद्दीपनाभावेन रतिसङ्कोचे तस्या वृत्तिः
प्रकाशत इति सम्भोगेच्छाभेदः। अत्र व्यतिरेकप्रदर्शनम्। अन्यथा
5 सम्भोगेच्छाभेदाभाव[2]काले समञ्जसा समर्थातुल्यतां प्राप्नोति। लीन-
तया स्थितिं विना कदापि सम्भोगेच्छा नोद्गच्छेदिति[3]। समर्थायां बहि-
र्भावान्तरास्पर्शित्वाच्छ्री कृ ष्ण स्य सदा परमवश्यत्वम्। यथा

न पारयेऽहं निरवद्यसंयुजां
स्वसाधुकृत्यं वि[16a]बुधायुषापि वः।
10 या माभजन्दुर्जरगेहशृङ्खलाः
संवृश्च्य तद्वः प्रतियातु साधुना ॥६६॥[4]

इति। सामान्य[5]रतिविषयतयाज्ञातत्वे[6]ऽपि श्री कृ ष्ण स्य ज्ञाततया
समर्थायाः सर्वविस्मारिगन्धत्वम्। यथा श्री वि द ग्ध मा ध वे

एकस्य श्रुतमेव लुम्पति मतिं कृष्णेति नामाक्षरं
15 सान्द्रोन्मादपरम्परामुपनयत्यन्यस्य वंशीकलः।
एष स्निग्धघनद्युतिर्मनसि मे लग्नः सकृद्वीक्षणात्
कष्टं धिक्पुरुषत्रये रतिरभून्मन्ये मृतिः श्रेयसी ॥६७॥[7]

इति। अत्र व्यतिरेकप्रदर्शनमेतदभावे समञ्जसायाः सर्वस्म[8]रणं स्यात्[9]।
यथा

20 का त्वा मु कु न्द महती कुलशीलरूप-
विद्यावयोद्रविणधामभिरात्मतुल्यम्।

---

1 BP, X. 61. 4. See ante pp. 15-16 for the full text of the verse.
2 सम्भोगेच्छाया लीनवृत्तितया स्थितत्वाभावे।
3 समञ्जसायाः।
4 BP, X.32.22.
5 बाल्यकालाद्यवस्थायाः।
6 नासौ रमणो नाहम रमणीतिवत्।
7 VM, II. 9.
8 B ०विस्म०, A ०स्मा० for ०स्म०.
9 ACD omit it.

धीरा पतिं कुलवती न वृणीत कन्या
काले[1] नृ सिं ह नरलोकमनोऽभिरामम् ॥६८॥[2]

इति[3] । अन्यथा वि द र्भ देशस्थितायाः श्री रु क्मि ण्याः श्री[4] कृ ष्ण नाम-रूपकुलशीलादिश्रवणं जातं । श्री व्र ज स्थायाः श्री गो पे न्द्र[5] मित्र-तनयायाः[6] श्री रा धि का यास्तत्र जातमिति[7] न सम्भवेत् । अत एव सर्वविस्मर[16b]णादेव समर्थायाः स्वरूपोत्पन्नत्वम[8]न्यथा संस्कारोत्पन्नत्वं स्यात् ।

श्या मः स एवाद्यगतिर्ममायम्[9]

इतिवदिति समर्थायाः सान्द्रतमत्वम् । यथा तत्रैव

अग्रे वीक्ष्य शिखण्डखण्डमचिरादुत्कम्पमालम्बते
गुञ्जानान्तु विलोकनान्मुहुरसौ सास्रं परिक्रोशति ।
नो जाने जनयन्नपूर्वनटनक्रीडाचमत्कारितां
बालायाः किल चित्तभूमिमाविशत्कोऽयं नवीनो ग्रहः ॥६९॥[10]

इति । तत्रैव पौ र्ण मा स्या वाक्यं[11]

प्रत्याहृत्य मुनिः क्षणं विषयतो यस्मिन्मनो धित्सते[12]
बालासौ विषयेषु धित्सति ततः[13] प्रत्याहरन्ती मनः ।
यस्य[14] स्फूर्त्तिलवाय हन्त हृदये योगी समुत्कण्ठते
मुग्धेयं किल पश्य तस्य हृदयान्निष्कान्तिमाकाङ्क्षति ॥७०॥[15]

---

1 विवाहकाले ।
2 BP, X. 52. 38.
3 व्यतिरेकप्रदर्शनम् ।
4 D omits श्री०.
5 D ०व्रजेन्द्र०.
6 D ०कन्यायाः.
7 श्रीकृष्णनामरूपकुलशीलादिकश्रवणं न जातमपि तु जातम् । ननु तर्हि समर्थाया निसर्गोत्पन्नत्वमायाति । नहि नहि तत्राह ।
8 भवति । न तु गुणादिस्मरणात्स्वरूपोत्पन्नत्वम् ।
9 UN, p. 402.
10 VM, II. 15, with गुञ्जानाञ्च for गुञ्जानान्तु in *b*.
11 ABC omit तत्रैव० वाक्यम्.
12 AD ०ति.
13 कृष्णात् ।
14 कृष्णस्य ।
15 VM, II. 17, with बत for किल in *d*.



इति च[1]। पुनस्तत्रैव तस्या वाक्यं[2]

पीडाभिर्नवकालकूटकटुता गर्वस्य निर्वासनो
निःस्यन्देन मुदां सुधामधुरिमाहङ्कारसङ्कोचनः।
प्रेमा सुन्दरि न न्द न न्द न परो जागर्ति यस्यान्तरे
5 ज्ञायन्ते स्फुटमस्य वक्रमधुरास्तेनैव विक्रान्तयः ॥७१॥[3]

इति च। एषु[4] पद्येषु रतेः स्वरूपाधिक्य[17a]वैलक्षण्यज्ञापकव्यभिचारि-सात्त्विकानुभावानामौत्कट्येन वैलक्षण्येन च समर्थायाः सान्द्रतमत्वम्। अत्र व्यतिरेकप्रदर्शनमेतदभावे

निश्वासस्ते कमलवदने म्लापयत्योष्ठबिम्बं
10 शय्यायाश्च कृशिमकलिता[5] चेष्टते देहयष्टिः।
द्वन्द्वबाह्वणोर्विकिरति चिरं रु क्मि णि श्या म मम्भो
न श्रीभाविन्युपयमविधौ शोभते विक्रियेयम् ॥७२॥[6]

इति। समञ्जसायाः सान्द्रत्वं तत्तदौत्कट्याद्यभावात्। समर्थायाः सान्द्र-तमत्वादैश्वर्यानुसन्धानावकाशो नास्ति। यथा ल लि त मा ध वे

15 शिखरिभरवितर्कतः प्रतप्त
समहम[7]हर्निशमीक्षया प्रियस्य।
हृदयमिह समस्तवल्लवीनां
युगपदपूर्वविधं द्विधा बभूव ॥७३॥[8]

इति। व्यतिरेकमाह। समञ्जसायाः सान्द्रत्वादैश्वर्यानुसन्धानाव-
20 काशोऽस्ति। यथा श्री द श मे

यस्याङ्घ्रिपङ्कजरजःस्नपनं महान्तो
वाञ्छन्त्यु मा प ति रिवात्मतमोऽपहत्यै।

---

1 C omits it.
2 ABC omit पुन॰ वाक्यम्.
3 VM, II. 18.
4 त्रिषु।
5 C ॰रिता॰.
6 UN, p. 521.
7 समहं सोत्सकं सानन्दं साक्षाद्दर्शनात्।
8 LM, X, 38, p. 524.

यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं
जह्यामसून्व्रतकृशाञ्छतजन्मभिः स्यात् ॥७४॥[1]

इत्यैश्वर्यज्ञा[17b]नं प्रेमापकर्षकमत एवात्र शतजन्मभिः स्यादिति सम्भावना। समर्थायान्तु

5　नो चेद्वयं विरहजाग्न्युपयुक्तदेहा
ध्यानेन याम पदयोः पदवीं सखे ते ।[2]

इत्यत्रेदानीं यामेति प्रेमोत्कर्षसूचिका सम्भावना। औत्सुक्यौत्कट्यसूचनात्। किञ्च। समर्थासमञ्जसयोर्वैशिष्ट्यं वृत्तिभिरेव प्रयोजकं, यथेश्वरजीवयोर्वैशिष्ट्यं

10　स ईशो यद्वशे माया स जीवो यस्तयार्दितः

इत्येतद्रूपाभ्यां[3] वृत्तिभ्यां प्रयोजकम्। यथेश्वरवृत्तिर्जीवे नोदेति तथा समर्थाया वृत्तिः समञ्जसायां नोदेति। यथा जीवस्य वृत्तिरीश्वरे नोदेति तथा समञ्जसाया वृत्तिः समर्थायां नोदेति। यथा सतो वृत्तिश्चिति न, चितो वृत्तिः सति न। यथा तयो[4]र्वृत्तिरानन्दे न, आनन्दस्य वृत्तिस्तयोर्न।
15 यथा मायावृत्तिर्जीवेश्वरयोर्न, तयोर्वृत्तिस्तस्यां[5] न। यथा सत्त्वगुणस्य वृत्तीरजसि न, रजसो वृत्तिः सत्त्वगुणे न। तयो[6]र्वृत्तिस्तमसि न, तमसो वृत्तिस्तयोर्न। एवं समर्थाया वृत्तिः समञ्जसायां न, [18a] समञ्जसाया वृत्तिः समर्थायां न। तत्र[7] समञ्जसाया वृत्तिः पाणिग्रहणाद्या। समर्थाया वृत्तिर्लोकधर्ममर्यादातिरस्काराद्येति सिद्धान्तमुक्त्वा व्यतिरेकमाह। दाम्पत्ये[8] यदि समर्था स्यात्तदा

1 BP, X. 52. 43.
2 BP, X. 29. 35.
3 मायाधीशमायावशाभ्याम्।
4 सच्चितोः।
5 मायायाम्।
6 सत्त्वरजसोः।
7 B अत्र.
8 ननु न भवतु समञ्जसासमर्थयोः परस्परगुणसञ्चारः. सालक्षण्यसञ्चारः सालक्षण्यञ्च, किन्तु नायकनायिकयोर्गुणाधिक्येन वैदग्ध्यविलासित्वात्पतिपत्न्यामपि समर्था सम्भवेत्प्रीत्याधिक्यादित्यत समाधानमाह दाम्पत्य इति।

यो ग मा या या औपपत्यस्य च परकीयात्वस्य चाजागलस्तनन्यायेन[1] पिष्ट-पेषितन्यायेन चाप्रयोजकत्वं स्यात्। तेन[2] रसोत्कर्षाभावाद्भक्तानामरोचकत्वेन च[3] श्रीम दु ज्ज्व ल नी ल म णि वि द ग्ध मा ध व दा न के लि कौ मु द्या दिकरणे प्रवृत्तिर्न स्यात्। प्रवृत्तौ सत्यां तेनाप्रयोजकत्वेन बालचेष्टितं स्यात्। समर्थाया महिमज्ञाप[4]नं प्रयोजनमिति[5] केचिद्वदन्ति। तत्तु महिमज्ञापनमज्ञानं प्रति न तु दाम्पत्यमय्याः समर्थायाः स्वरूपज्ञान-विज्ञानं[6] प्रति। यथा दुर्गभेदकथनेन हस्तिसामर्थ्यज्ञाप[7]नं तदज्ञान्प्रति न तु तद्विज्ञान्प्रति।[8] तेन श्रीम दु ज्ज्व ल नी ल म ण्या दीनामज्ञसेव्यत्व-मायाति। तेन

हृदि यस्य प्रेरणया प्रवर्त्तितोऽहं वराकरूपोऽ[18b]पि[9]

इति वचनाच्छ्री म हा प्र भु णा निजप्राकट्यमुख्यप्रयोजनस्य[10] श्रीम द्रू प गो स्वा मि कृतश्रीम दु ज्ज्व ल नी ल म ण्या दिभिः सम्पादितत्वात्। प्राकट्यमुख्यप्रयोजनहान्या म हा प्र भु प्राकट्यमप्रयोजकं स्यात्[11]। व्यतिरेक-दोषमुक्त्वा सिद्धान्तमाह। औपपत्यादिकमविनाभावेन स्वसिद्धये समर्था-रतिरूपं प्रयोजनमाक्षिपति। विज्ञाः खलु[12] श्री कृ ष्ण स्य पूर्णस्वयम्भग-वत्तापर्यन्ततत्त्वज्ञाः। ते तु ना रा य णा दीनां भगवत्तातारतम्येन महा ल क्ष्म्या दीनां समञ्जसायास्तारतम्यं जानन्ति। श्री कृ ष्ण स्य स्वयम्भग-वत्त्वेन तत्प्रियाणां पूर्णस्वयं समञ्जसां रतिञ्च महा ल क्ष्म्या दीनां रतिजातेर-

---

1 अजागलस्तनं दुग्धशून्यं तस्मात्तस्य भजनं रसहीनमित्यर्थः।

2 अप्रयोजकत्वेन।

3 A omits it.

4 B omits ॰प॰.

5 उज्ज्वलादीनां प्रयोजनं समर्थाया महिमज्ञापनम्।

6 जनम्।

7 A omits ॰प॰.

8 C omits यथा दुर्ग॰ तद्विज्ञान्प्रति.

9 BRS(K), p. 1. The next line is: तस्य हरेः पदकमलं वन्दे चैतन्यदेवस्य.

10 रसविशेषसमर्थास्वादनानुभवस्य।

11 BC omit it.

12 नन्वालम्बनादिवैशिष्ट्येन स्वरूपस्य विज्ञविज्ञेयत्वमिति यत्पुरोक्तं तत्र के विज्ञाः के वा स्वरूपं जानन्तीत्यत्राह विज्ञाः खल्विति।

भेदेन जानन्ति।[1] श्रीकृष्णस्य पूर्णतमस्वयम्भगवत्त्वसाधकस्य तै[2]-रज्ञातस्य समर्थारूपस्य रतिजातिविशेषस्य प्रकटनं श्रीमहाप्रभु-प्राकट्यमुख्य[3]प्रयोजनम्। तेन[4] महाप्रभो रसमोर्ध्वोत्कर्षप्रकटनं

स्वयञ्च वितृतं न यद्गुरुतयावतारान्तरे[5]

5 इति वचनात्। तेन च श्रीमदुज्ज्वलनीलमण्यादीनां पर[19a]म-प्रयोजकत्वेन परमविज्ञसेव्यत्वम्। रतिजातिभेदादेरालम्बनादिजातिभेदः। अत्र प्रमाणं श्रीमद्दासगोस्वामिकृतस्तवमालायाम्

अनाबेद्यां पूर्वैरपि मुनिगणैर्भक्तिनिपुणैः
श्रुतेर्गूढां प्रेमोज्ज्वलरसफलां भक्तिलतिकाम्।
10 कृपालुस्तां गौडे प्रभुरति[6]कृपाभिः प्रकटयन्
शचीसूनुः किं मे नयनसरणीं यास्यति पुनः ॥७५॥[7]

अत एव[8] श्रीमहाप्रभुशक्तिरूपैः श्रीमद्रूपगोस्वामिचरणैः श्रीमदुज्ज्वलनीलमणिविदग्धमाधवदानकेलिकौमुद्यादि-गतानां समर्थारतिविलासरूपाणां लीलानां सूत्ररूपे श्रीस्मरणमङ्गले
15 प्रतिज्ञातं

श्रीराधाप्राणबन्धोश्चरणकमलयोः केशशेषाद्यगम्या
या साध्या प्रेमसेवा व्रजचरितपरैर्गाढलौल्यैकलभ्या।
सा स्यात्प्राप्ता यया तां प्रथयितुमधुना मानसीमस्य सेवां
भाव्यां रागाध्वपान्थै र्व्रजमनुचरितं नैत्यिकं तस्य नौमि ॥७६॥[9]

20 इति।[10]

---

1 अज्ञाः।
2 विज्ञैः।
3 D omits °मुख्य° but comments it as मुख्यम्.
4 महाप्रभोः प्राकट्यमुख्यप्रयोजकत्वेन।
5 StM, p. 11.
6 C °रपि°.
7 SA, pp. 8-9. Our author attributes it to *Stavamālā* by Dāsa Gosvāmin, but this is *Stavāvalī* while *Stavamālā* is a different work by Rūpa Gosvāmin.
8 आलम्बनादिजातिभेदात्।
9 SM, 1 in BBT, p. 1903. Cited in GLA, I. 3.
10 AD omit it.

अत्रैव परमोत्कर्षः शृङ्गारस्य प्रतिष्ठितः[1]

इत्यौपपत्यस्य शृङ्गारपरमोत्कर्षनिमित्तत्वेन परमप्रयोजकत्वम् । [19b] तथा

लघुत्वमत्र यत्प्रोक्तं तत्तु प्राकृतनायके ।
न कृष्णे रसनिर्यासस्वादार्थमवतारिणि ॥७७॥[2]

5 अस्यार्थः । प्राकृतनायके प्राकृतौपपत्ययुक्तप्राकृतोपपतौ न कृष्ण उपपतौ । तत्र[3] हेतुः । रसनिर्यासस्वादार्थमवतारिणि । स्वादोऽत्र ण्यर्थः । अवतारिण्यौपपत्यस्याप्राकृतत्वेन नित्यत्वात्प्रकटितौपपत्य इत्यौपपत्यस्य रसनिर्यासनिमित्तत्वेन[4] परमप्रयोजकत्वम् । तथा

नेष्टा यदङ्गिनि रसे कविभिः परोढा-
10 स्तद्गोकुलाम्बुजदृशां कुलमन्तरेण ।
आशंसया रसविधेरवतारितानां
कंसारिणा रसिकमण्डलशेखरेण ॥७८॥[5]

इत्यत्र परोढात्वस्य[6] रसविध्यपरपर्यायरसनिर्यासनिमित्तत्वेन रसनिर्यासस्य तु श्रीकृष्णरसिकमण्डलशेखरनिमित्तत्वेन परोढात्वस्य परमप्रयोजकत्वम् ।
15 अत एव परोढात्वौपपत्याभावे निमित्ताभावे नैमित्तिकस्याभाव[7] इति न्यायाच्छृङ्गारपरमोत्कर्षस्य तन्निमित्तक[8]श्री [20a] कृष्णरसिकमण्डल-शेखरत्वस्य चाभावः । अतस्तयो[9]र्नित्यत्वम् । तेन योगमायया नित्यं परमप्रयोजकत्वमायातम् । रसनिर्यासस्त्वत्र समर्थारतिरूपः । रसो[10] नित्यः किमुत रसनिर्यासः । किञ्च दाम्पत्ये यदि समर्था स्यात्तदा रसनिर्या-
20 सस्याप्रकटलीलाविशेषगतत्वेन जातप्राकट्यलीलामयं श्रीगीतगोविन्द-

1 UN, p. 14.
2 UN, pp. 14-15.
3 BC अत्र.
4 समर्थरतिरूपरसनिर्यासनिमित्तत्वेन ।
5 Cited in UN, pp. 99-100.
6 C omits it.
7 परमोत्कर्षस्याभावः ।
8 रसनिर्यासनिमित्तक० ।
9 परकीयात्वौपपत्ययोः ।
10 शृङ्गाररसः ।

श्री वि द्या प ति कृतगीतचयश्री रा मा न न्द रा य महाशयकृतनाटका-
दीनां विज्ञानं प्रत्यप्रयोजकत्वमरोचकत्वञ्च। तथा सति

अपारं कस्यापि प्रणयिजनवृन्दस्य[1] कुतकी
रसस्तोमं हृत्वा मधुरमुपभोक्तुं कमपि यः[2]।
5 रुचं स्वामावव्रे द्युतिमिह तदीयां प्रकटयन्[3]

इत्यनिर्वचनीयापाररसस्तोमास्वादनपरश्री म हा प्र भु कृतनिरन्तरतत्तदा[4]-
स्वादनानुपपत्तिः। दाम्पत्यं[5] येषां[6] बहिरङ्गजनानां[7] समाधानापेक्ष्यं
तैरैश्वर्यमय गो लो क गतं तदुत्थाय[8] समाधेयम्। बहिरङ्गजनेषु सम-
र्थायाः स्वरूपविलासनित्यताकथनेन किं प्रयोजनम्। तदर्थे[9] दाम्पत्ये समर्था
10 स्यादिति कथनं प्रवर्तक[10]जनभ्रामक[20b]त्वादनुपयुक्तम्। दाम्पत्ये
यदि समर्था स्यात्तदा श्री कृ ष्ण स्यौपपत्यप्रपञ्चनेन[11] बालचेष्टितम-
स्निग्धत्वञ्च[12] स्यात्प्रयोजनं विना प्रियानभिरुचितप्रकाशनात्। अनभि-
रुचितत्वं यथा

रा धि [का]। अपवार्य सभयम्। सहि परित्ताहि परित्ताहि।

1 C ॰स्यापि॰, but this affects metre.

2 चैतन्यः।

3 StM, pp. 7-8. The fourth foot is स देवश्चैतन्याकृतिरतितरां नः कृपयतु.

4 गीतगोविन्दविद्यापतिकृतगीतनाटकादीनाम्।

5 ननु भवतु महाप्रभोरास्वादनीयं किन्तु निजोपास्यं प्रकाशनस्य सर्वथानुपयुक्तत्वाद्गोपयेन्मातृजारवदित्यादिना बहिरङ्गसमाधानार्थं स्वीयात्वं कथनीयं न तु मानावृत्याहेत्यत एवं न वक्तव्यमित्याह दाम्पत्यमिति।

6 पण्डितानाम्। 7 ABC ॰जन॰.

8 C ॰स्थाप्य, D comments दाम्पत्यमुत्थाय.

9 ननु कर्णविद्धकदलहस्तन्यायेन प्रकारान्तरेण प्रवर्त्य तस्य भाविहितार्थं वस्तुद्वारा भविष्यतीति विश्वासजनकत्वेन वक्तव्यमेवमित्यत्र दोषमाह। तदर्थं बहिरङ्गजनसमाधानार्थं।

10 BC omit ॰क॰.

11 B ॰प्रपञ्चने.

12 अरसिकत्वमधीरत्वमिति यावत्।

एसा कालरत्तीव[1] दारुणा वुड्ढिया मं दिट्ठवदी ।

इति ललितावृन्दाभ्यां चलिता ।[2]

कृष्णः । अपवार्य । मम सङ्गमामृतरसम्[3]

इत्यत्र

5 जटिला व्याघ्रीचकिता तृषितापि[4] तन्न जिघृक्षति[5]

इति

कृष्णः । स्वगतम् । हन्त खरा दभिमन्युमभिज्ञाय
कातरेयं प्रिया यष्टिवद्भूमौ निपपात[6]

**इत्यादि । अरसिकत्वञ्च प्रयोजनं विना स्वानभिरुचितप्रकाशनात् । लीला-
10 विशेषकौतुकार्थमिति चेत्तत्तु कौतुकं ततस्ततः पूर्वकारणादकौतुके पर्य-
वस्यति । श्रीकृष्णास्निग्धत्वेन प्रियाणामपकर्षश्च जायते ।[7] व्यतिरेके
दोषमुक्त्वा[8] सिद्धान्तमाह ।**

मया परोक्षं भजता तिरोहितम्[9]

**इति श्रीकृष्णस्य श्रीव्रजदेवीषु परमहितैषित्वात्परमस्निग्धत्वम् ।
15 उद्[21a]र्कानुसन्धानातिशयात्[10] परमप्रयोजक[11]चेष्टितत्वञ्च ।**

---

1 AB काला अत्तीव.

2 VM, V; p. 177 with निष्कान्ता for चलिता. The Sanskrit rendering of the Prākṛta portion is as follows: सखि परित्रायस्व परित्रायस्व । एषा कालरात्रिरिव दारुणा वृद्धा मां दृष्टवती.

3 VM, V. 54.

4 C omits ०पि० but adds after it न पिबति.

5 C जिघ्रति. VM, V. 54 reads the full text as follows:
मम सङ्गमामृतरसं न जिघृक्षति न च जिहासति प्रकटम् ।
जटिलाव्याघ्रीचकिता तृषिता राधाकुरङ्गीयम् ॥

6 VM, VII; p. 258.

7 C omits श्रीकृष्ण० जायते.

8 BD दोष उक्तः.

9 BP, X. 32. 27.

10 भद्रानुसन्धानातिशयात् ।

11 A ०जनक०, D ०प्रयोजन०.

शृङ्गाररससर्वस्वं शिखिपिच्छविभूषणम् ।
अङ्गीकृतनराकारमाश्रये भुवना[1]श्रयम् ॥७६॥[2]

इति परमरसिकशिरोमणित्वं[3] शृङ्गाररससर्वस्वमिति शृङ्गारस्य सर्वस्वं निर्यासरूपम्। एतदन्यथाभावे स्वरूपान्यथाभावः। अत एव श्री व्र ज-
5 सु न्द री णां परमोत्कर्षः। अत एव समर्थानिमित्तौपपत्यप्रकाशनस्य परम-प्रयोजकत्वेन तत्तत्सिद्धया[4] तत्तद्धानिः[5]। तस्माद्दाम्पत्ये समञ्जसैव न तु समर्थेति। पुनश्च व्यतिरेके दोषः। किञ्च दाम्पत्ये यदि समर्था स्यात्तदौपपत्यनिमित्तलीलायाः प्रतीयमानकादाचित्कतया लीलाद्वैरूप्येण[6] तदेकविधताहान्या तुरीयताहानेः कारणता[7]पाताच्छ्री कृ ष्ण स्यांशता-
10 पत्तिः। सिद्धान्तः।

एते चांशकलाः पुंसः कृ ष्ण स्तु भगवान्स्वयम्[8]

इति श्री कृ ष्ण स्यानन्यापेक्षितुरीयता। तयौपपत्यनिमित्तलीलायाः कारणातितत्त्वेन कादाचित्कत्वप्रतीयमानताया अभावाद्देदीप्यमाननित्यता। तया लीलाया [21b] अद्वैरूप्येणैकविधता। तस्माद्दाम्पत्ये समञ्जसैव
15 न तु समर्थेति। यदि समर्थायां सामञ्जस्यं प्रायिकमसामञ्जस्यं कादाचित्कं तदा नायिकाप्रायेतिवत्समञ्जसाप्रायेति संज्ञाभविष्यन्न तु समर्थेति। यदि सामञ्जस्यमुपादेयमसामञ्जस्यमनुपादेयं तदा कादाचित्कम[9]पि त[10]न्नाः भविष्यत्। मुख्यसमञ्जसेति संज्ञाभविष्यन्न तु समर्थेति।[11] यद्यसामञ्जस्य-मनुपादेयं तदा कादाचित्कं कथं स्यात्कादाचित्कत्वेनानुपादेयत्वं[12] गम्यं

---

1 C प्रभुमा०.
2 KK, 93.
3 A omits परम० शिरोमणित्वम्.
4 नित्योपपत्यनित्यपरकीयानित्यसमर्थानां स्निग्धत्वं रसिकादेश्च सिद्धया।
5 पतित्वस्वीयात्वसमञ्जसात्वानामस्निग्धत्वा-रसिकादीनाञ्च हानिरेव मता।
6 प्रकटे परकीयाप्रकटे स्वकीयेति।
7 D omits ०ता०.
8 BP, I. 3. 28.
9 प्राकट्येनौपपत्यम्।
10 असामञ्जस्यम्।
11 C omits यदि समर्थायां० मुख्यसमञ्जसेति संज्ञाभविष्यन्न तु समर्थेति.
12 CD omit ०त्व०.

स्यात्। तस्मात्कादाचित्कतामननमतज्ज्ञता[1]सूचकम्। अत एवासामञ्जस्यं[2] नित्यम्। पञ्चमपुरुषार्थसाररूपत्वाद्[3]समञ्जसेति संज्ञा न जाता किन्तु समर्थेति[4]।

असमञ्जसापि भजते सामञ्जस्यं महत्सदा।
5 विरोधालङ्कृतिरिति श्रीसमर्थां समाश्रिता ॥८०॥
निष्पीडनात्तिलात्तैलं सिकतातो न तत्ततः।[5]
ईशाज्जीवस्तथा विश्वं जीवाद्विश्वात्कचिन्न सः।
समञ्जसा समर्थातः समर्था न ततः कचित् ॥८१॥

सदा सामर्थ्यप्रकटत्वात्[6] समर्थेति संज्ञा। सामर्थ्यस्य सदा प्रयोजकत्वात्
10 [22a] सदापेक्षितत्वम्। प्रयोजनं श्री व्र ज सु न्द री णां श्री कृ ष्ण स्य च परमानन्दचमत्कारप्रा[7]पणपरमो[8]त्कर्षनिष्पादनरूपम्। यथा क्षुत्पिपासादयो जीवधर्मास्त एव श्री कृ ष्ण गताः परमप्रेमवश्यतासाधकत्वात्[9] परमोपादेयाः। तथा जीवगतमौपपत्यं लघु। श्री कृ ष्ण गतन्तु तन्महाभावसाधकत्वात्परमोपादेयमिति। श्री कृ ष्ण स्यौपपत्यं निरुपमम्।
15 श्री कृ ष्ण स्यौपपत्यमिव श्री व्र ज दे वी नां परकीयात्वं निरुपमम्। श्री व्र ज दे वी नां परकीयात्वमिव श्री कृ ष्ण स्यौपपत्यं निरुपमम्।[10] श्री व्र ज दे वी नां परकीयात्वं निरुपमं श्री कृ ष्ण स्यौपपत्यमिव।

महाभावस्तथोद्दीप्तसुदीप्तौ सात्त्विकोत्तमौ।
पूर्वरागस्तथा प्रौढ उत्कटा व्यभिचारिणः ॥८२॥

---

1 C ॰मज्ञता॰.
2 समर्थायाः।
3 पञ्चमपुरुषार्थः प्रेमा। तत्सारो महाभावस्तत्स्वरूपत्वात्।
4 C omits किन्तु समर्थेति.
5 C omits this line.
6 C ॰प्राकट्यात्.
7 C ॰हया॰.
8 D ॰परो॰.
9 C ॰प्रेमधारकत्वात्.
10 BD insert here श्रीव्रजदेवीनां परकीयात्वमिव.

पूर्वरागस्य प्रौढत्वात्प्रौढा मानादिकाभिधाः ।
प्रौढाः सम्भोगभेदाश्च रागः काष्ठां परां गतः ॥८३॥
श्रीसमर्थां विना न स्युः प्रौढाः प्रेमादयस्तथा ।
रासदानादिलीलाश्च तथा कुब्जादिकेलयः ॥८४॥
5 व्र ज दे वी गणोत्कर्षो महिषीवर्गतस्तथा ।
तथा पूर्णतमत्वञ्च श्री कृ ष्ण स्य शु[22b]चे[1]रतः ॥८५॥
उत्कर्षः परमो रागानुगारूपञ्च साधनम् ।
समर्थाया निमित्तं स्यादौपपत्यं परं ह रेः ॥८६॥
निमित्तस्यौपपत्यस्य व्यतिरेकान्न सा[2] भवेत् ।
10 निमित्तं रतिभेदानां सर्वेषां भेदकारणम् ॥८७॥

इति ।

श्री मु कु न्दं प्रभुं वन्दे यस्य स्मरणमात्रतः ।
स्वरूपं श्रीसमर्थाया हृदि ताण्डवमाचरेत् ॥८८॥

अत्र तृतीयरत्ययवकरनिरसनं जातम् । इति समञ्जसासमर्थास्वरूपप्रकाशनं
15 तृतीयं पूर्णम् ॥

श्रीमत्कामानुगां वन्दे यस्याः प्रव्यक्तये स्वयम् ।
श्री नन्द न न्द नो गौ डे श्री गौ र वि धु तामगात् ॥८९॥

## अथ[3] कामानुगास्वरूपप्रकाशनम् ।

सा कामरूपा सम्भोगतृष्णां या नयति स्वताम् ।
20 यदस्यां कृ ष्ण सौख्यार्थमेव केवलमुद्यमः ॥९०॥[4]

इति लक्षिता कामरूपा समर्थापरपर्याया द्वयोः समानलक्षणत्वात् । तथा हि समर्थालक्षणं

1 श्रृङ्गारस्य ।
2 समर्था ।
3 C omits it.
4 BRS (K), p. 10.

कश्चिद्विशेषमायान्त्या सम्भोगेच्छा ययाभितः ।
रत्या तादात्म्यमापन्ना सा समर्थेति भण्यते ॥६१॥[1]
सर्वाद्भुतविलासोर्मिचमत्कारकरश्रियः ।
सम्भोगेच्छाविशेषोऽस्या[2] रते[23a]र्जातु न भिद्यते ॥६२॥[3]

5 इति। अत एव समर्थानुगैव कामानुगा। समर्थानुगयैव समर्थाप्राप्त्या तद्विषयश्री न न्द न न्द न प्राप्तिः। समञ्जसानुगा तु वैधी। अस्यां[4] शास्त्रोक्तायाः प्रबलायाः

पतिरेव गुरुः स्त्रीणाम्[5]

इत्यादिमर्यादाया अनुकरणात्।

10 तत्तद्भावादिमाधुर्ये श्रुते धीर्यदपेक्षते ।
नात्र शास्त्रं न युक्तिञ्च तल्लोभोत्पत्तिलक्षणम् ॥६३॥[6]

इति लक्षितस्य कामानुगानिमित्तस्य लोभस्याभावाच्च।

शास्त्रोक्तया प्रबलया तत्तन्मर्यादयान्विता ।
वैधी भक्तिरियं कैश्चिन्मर्यादामार्ग उच्यते ॥६४॥[7]

15 इति निरुक्तिव्याप्तेः। अन्यथा समर्थोत्कर्णस्याप्रयोजकत्वाच्च।

कामानुगास्वरूपावगमे यत्नः सुदुर्लभे ।
कर्तव्यः सर्वथा विज्ञैस्तच्छ्रद्धावासितान्तरैः ॥९५॥
अस्या[8] व्यवस्था संलेख्या साधनानां चतुष्टये ।
अतः समासतः प्रोक्तं स्वरूपमात्रमत्र हि ॥९६॥

---

1 UN, p. 412.
2 समर्थायाः ।
3 UN, p. 413.
4 समञ्जसायाम् ।
5 US, I. 47 with पतिरेको for पतिरेव.
6 BRS (K), p. 10.
7 BRS (K), p. 9.
8 कामानुगायाः ।

अत्र प्रथमसाधनावकरद्वितीयसाधनावकरनिरसनं जातम् । इति कामानुगा-स्वरूपप्रकाशनं चतुर्थं पूर्णम् ॥

[23b] द्वैरूप्यं[1] विमतं स्पष्टं स्थानलीलागतं भवेत् ।
द्वैविध्यं[2] तद्गतं गूढमतिगूढं क्रमेण तत् ॥९७॥
5 साध्यसाधनगत्वेन[3] त्रिविधं तद्द्विधा[4] पुनः ।
निरस्तं विमतं स्पष्टमाद्ये तत्र चतुष्टये ॥९८॥

तत्तु स्पष्टविमतनिरसनं साध्यगतमुपपत्नीभावाभिमानात्मतया पत्नीभावाभिमानात्मतया [च] समर्थाया द्वैरूप्यं यत्तस्य विमतस्य खण्डनेन सिद्धम् । समर्थाया द्वैरूप्यरूपस्य विमतस्य खण्डनेन तदनुगायाः कामानुगापरपर्यायाया 10 द्वैरूप्यरूपविमतखण्डनात्साधनगतन्तु तत्सुतरां जातम् । किञ्च श्री व्र ज-गो ल क योः सालक्षण्यं स्पष्ट[5] विमतानुकूलम् । तत्तु समर्थारतिद्वैरूप्यरूपविमतखण्डनेन निराकृतं जातम् ।

प्रज्ञयास्य चतुष्कस्य स्वरूपाणां किलाग्रतः ।
वैलक्षण्यं सुबोध्यं[6] स्यादादौ तल्लिखितं ततः ॥९९॥

15 इति स्वरूपप्रकाशनं चतुष्टयं पूर्णम्[7] ॥

---

1 प्रकाशनचतुष्टयस्यान्तेऽनुवादमाह । स्पष्टविमतं धामलीलाद्वैरूप्यञ्च समर्थाया उपपत्नीभावाभिमानात्मकपत्नीभावाभिमानात्मकत्वाभ्यामिति । भुवि वृन्दावनं नित्यं वृन्दावनञ्चेति वृन्दावनस्य द्वैरूप्यम् । लीला परकीया लीला स्वकीया । धाम्नो द्वैविध्यं प्रपञ्चगोचरागोचरत्वाभ्यामिति गूढविमतम् । लीलाया द्वैविध्यं विश्वनिमित्तलीलाया योगायोगाभ्यामित्यतिगूढविमतम् ।

2 धामलीलागतम् । धामगतं द्वैविध्यं गूढविमतम् । लीलागतं द्वैविध्यमतिगूढविमतमिति ।

3 समर्थागतत्वेन समर्थानुगागतत्वेन ।

4 विमतस्य ।

5 C स्पष्टं.

6 C °र्ध्यं.

7 B सम्पूर्णम्.

श्रीमद्रूपपदाम्भोजद्वन्द्वं वन्दे मुहुर्मुहुः ।
महाभ्रान्तिहरं यस्य स्फुरणं[1] हृदये सकृत् ॥१॥

अथ वैलक्षण्यचतुष्टयम् ।[2] तत्र रतिवैल[24a]क्षण्यहेतुकं

## श्री व्र ज गो लो क यो र्वैलक्षण्यम् ।

5 यथा भा ग व ता मृ ते

यत्तु गो लो क नाम स्यात्तत्तु गो कु ल वैभवम् ।[3]

तदात्मवैभवत्वञ्च तस्य तन्महिमोन्नतेः ।[4]

अस्यार्थः । गो कु ल वैभवं[5] गो कु ल स्यैश्वर्यप्रकाशरूपम् । तस्य गो कु ल स्य तदात्मवैभवत्वं । तद्[6] गो लो क मात्मनः स्वस्य वैभवं 10 यस्य[7] तत्तदात्मवैभवं । तत्त्वम् । तन्महिमोन्नतेस्तस्मा द्गो लो का न्महिमोन्नतेर्हेतोः । अत्र[8] व्यतिरेकप्रदर्शनम् । अन्यथा गो लो क स्य गो कु लाप्रकटप्रकाशत्वे सति स्थानचतुष्टयत्वासिद्धेः । यद्यप्रकटत्वेन स्थानपृथक्ता तदा म धु पु री द्वा र क योरप्रकटप्रकाशाभ्यां स्थानषट्कता स्यात् । कथं

15 यस्य वासः पुराणादौ ख्यातः स्थानचतुष्टये[9]

इति स्थानचतुष्टयता । गो कु ल स्याप्रकटप्रकाशः कश्चिद्वर्तत इति केचित्कथयिष्यन्तीत्याशङ्क्य स्थान[10]चतुष्टयत्वं प्रदर्श्य तन्मतं निराकृतमिति । गो लो क स्यैश्वर्यप्रकाशरूपत्वं यथा श्री द श मे

---

1 AD स्मरणं०.
2 C omits this.
3 LBA, p. 168 with स्यात्तच्च.
4 LBA, p. 169.
5 गोकुलवैभवमित्यादेर्व्याख्या श्रीमुकुन्ददासगोस्वामिना कृतेति भण्यते ।
6 ACD स० for तद्०.
7 गोकुलस्य ।
8 पद्ये ।
9 LBA, p. 70.
10 AD add ०स्य after it.

नन्दस्त्वतीन्द्रि[24b]यं दृष्ट्वा लोकपालमहोदयम् ।
कृष्णे च सन्नतिं तेषां ज्ञातिभ्यो विस्मितोऽब्रवीत् ॥२॥[1]

अतीन्द्रियमदृष्टपूर्वम् । विस्मितः परममाधुर्याविष्टत्वेनैश्वर्यानुसन्धानाभावात् । अत एव श्रीनन्दादीनामैश्वर्यदर्शनसङ्कल्पो जातो न तु माधुर्यदर्शनसङ्कल्पः । तस्य[2] स्वत एव निरन्तरास्वादनात् । यथा तत्रैव तदन[3]न्तरं

ते चौत्सुक्यधियो राजन्मत्वा गोपास्तमीश्वरम् ।
अपि नः स्वगतिं सूक्ष्मामुपाधास्यदधीश्वरः ॥३॥[4]

सूक्ष्मामस्माभिरभिसन्धातुमशक्याम् ।

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्[5]

इति वचनादैश्वर्यं श्रीकृष्णो दर्शितवान् । यथा तत्रैव

इति स्वानां स भगवान्विज्ञायाखिलदृक्स्वयम् ।
सङ्कल्पसिद्धये तेषां कृपयैतदचिन्तयत् ॥४॥[6]

कृपया बन्धुजनोचितस्नेहेन । यथा बन्धुजनो बन्धुजनानां यत्राभिलाषो जायते तदवश्यमेव सम्पादयति तद्वत् । यद्यपि श्रीनन्दनन्दनस्य तत्रो[7]पादेयबुद्धिर्नास्ति तथापि तेषा[8]मत्याग्रहं दृष्ट्वा श्रीगोकुलस्यैश्वर्य-[9]रूपं गोलोकं दर्शयित्वा तेषां [25a] माधुर्यैकरुचिस्वभावात्तत्रारुचिमुदपादयत् । यथा श्रीस्तवमालायां

लोको रम्यः कोऽपि वृन्दाटवीतो
नास्ति क्वापील्यभ्रसा बन्धुवर्गम् ।

---

1 BP, X. 28. 10.
2 माधुर्यस्य ।
3 D omits ०न० .
4 BP, X. 28. 11 with त्वौत्सुक्य० in *a*.
5 BG, IV. 11.
6 BP, X. 28. 12.
7 गोलोके ।
8 उपनन्दादीनाम् ।
9 C श्रीगोकुलैश्वर्य० .

यो वैकुण्ठं सुष्ठु सन्दर्श्य भूयो
गोष्ठं निन्ये[1] पातु स त्वां मुकुन्दः ॥५॥[2]

किञ्च

नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः[3]

5 इत्यत्र परमानन्दनिर्वृतिर्लोको रम्यः कोऽपि वृन्दाटवीतो नास्ति क्वापीति-
निर्द्धाराज्जाता। गोलोकस्य गोकुलान्न्यूनत्वेन प्रमाणं यथा
श्रीभागवतामृते तदनन्तरं[4]

यथा पातालखण्डे
अहो मधुपुरी धन्या वैकुण्ठाच्च गरीयसी।
10 दिनमेकं निवासेन हरौ भक्तिः प्रजायते ॥६॥[5]

श्रीभागवतामृते[6]

एवं सप्तपुरीणान्तु सर्वोत्कृष्टन्तु माथुरम्।
श्रूयतां महिमा देवि वैकुण्ठभुवनोत्तमः ॥७॥[7]

वैकुण्ठशब्देनात्र गोलोकः कथ्यते तस्यैव गोकुलान्न्यूनत्वेनात्रो-
15 दाहरणीयत्वात् कृष्णवैकुण्ठत्वेन ख्यातत्वाच्च। अत्र श्रीस्वामि-
पादानां सम्मतिः[8]

अष्टाविंशे[9] ततो नन्दानयनं वरुणालयात्।
वैकुण्ठदर्शनञ्चाथ गोपानामनुवर्ण्यते ॥८॥[10]

इति।[11]

---

1 ABC निन्ये गोष्ठं०.
2 StM, p. 210.
3 BP, X. 28. 17.
4 D omits it.
5 Cited in LBA, p. 169.
6 BCD omit it.
7 Cited in LBA, p. 170.
8 C omits अत्र० सम्मतिः.
9 अध्याये।
10 SD introducing the verse of BP, X. 28. 1.
11 C omits it.

दर्शयामास लोकं स्वम्[1]

इत्यत्र व्याख्यातञ्च

लोकं वैकुण्ठाख्यम् ।[2]

अत एव गोस्वामिपादैरुक्तं श्रीस्तवमालायां

यो [25b] वैकुण्ठं सुष्ठु सन्दर्श्य[3]

5 इति। मधुपुरी विंशतियोजनात्मिका। ततः पुरात्मकादपि माथुराद्गोलोकस्य न्यूनत्वमागतम्।[4] अत एव श्रीदास[5] गोस्वामिपादरुक्तं श्रीमुक्ताचरिते[6]

वैकुण्ठाज्जनितो वरा मधुपुरी तत्रापि रासोत्सवा-
द्वृन्दारण्यमुदारपाणिरमणात्तत्रापि गोवर्द्धनः ।
10 राधाकुण्डमिहापि गोकुलपतेः प्रेमामृतप्लावनात्
कुर्यादस्य विराजतो गिरितटे सेवां विवेकी न कः ॥९॥[7]

दानकेलिकौमुद्याञ्च

आम्नायाध्वरतीर्थमन्त्रतपसां स्वर्गाखिल[8]स्वर्गिणां
सिद्धीनां[9] महतां द्वयोरपि तयोश्चिच्छक्ति वैकुण्ठयोः ।
15 वीर्यं यत्प्रथते ततोऽपि गहनं श्रीमाथुरे मण्डले
दोष्यत्तत्र ततोऽपि तुन्दिलतरं वृन्दावने सुन्दरे ॥१०॥[10]

अनयोः पद्ययोर्वैकुण्ठशब्देन कृष्णवैकुण्ठः कथ्यते। श्रीकृष्णजन्माभावस्य माथुरमण्डलस्पर्धाविषयत्वस्य चान्यवैकुण्ठे कथनानुपयोगात्। श्रीदासगोस्वामिपादैरुक्तं

1 BP, X. 28. 14.
2 SD on BP, X. 28. 14.
3 StM, p. 210.
4 B omits अत एव गोस्वामिपादैरुक्तं॰ न्यूनत्वमागतम्.
5 AB omit ॰दास॰.
6 B adds वृन्दावनम्. D omits श्रीमुक्ताचरिते.
7 MC, p. 110 with वैकुण्ठाज्जनितो॰ for वैकुण्ठाज्जनितो॰ in a.
8 AD स्वर्गार्थिनां॰.
9 ABC सिद्धानां॰.
10 DKK, 299 with तत्॰ in c.

वैकुण्ठादपि सोदरात्मजवृता द्वारावती सा प्रिया ।
यत्र श्रीशतनिन्दिपट्टमहिषीवृन्दैः प्रभुः खेलति ॥११॥[1]

इति । अत्र श्री[2]द्वारकातोऽपि [26a] कृष्णवैकुण्ठस्य न्यूनता स्पष्टा । अन्य वैकुण्ठे श्रीद्वारका स्पर्धानुपयोगात् । सितोपलावृक्ष इवालौकिकत्वमेव लौकिकत्वं भवति । सितोपला[3]वृक्षः पुनश्चेत्प्रकृतिं प्रापितः स सितोपलेव लौकिकत्वं पुनरलौकिकत्वं भवतीति मतं नश्वरवाददत्तावसरमतो हेयम् । दोषा[4]पकरणेन गुणाधानेन वालौकिकत्वस्यैकस्यापि पूर्वावस्थात उत्कर्षः प्रजायते । यथा हेम्नो ब्राह्मणकुमारस्य क्रमत इति मतश्च प्राकृतत्वापातेनैकरसत्वहान्या च नश्वरवाददत्तावसरमतो हेयम् । अत एवान्तर्भूतपरमालौकिकत्वेन[5] लौकिकत्वेन[6] च[7] केवलेन[8] परमालौकिकत्वेन[9] सदापृक्तया श्रीव्रजगोलकयोर्वैलक्षण्यम् । यथा चिन्तामण्यादीनां गोलकेऽनुवादरूपत्वं श्रीव्रजे विधेयरूपत्वम् । गोलोके तेषामनुवादरूप[10]त्वं यथा ब्रह्मसंहितायां

श्रियः कान्ताः कान्तः परमपुरुषः कल्पतरवो
द्रुमा भूमिश्चिन्तामणिगणमयी तो[26b]यममृतम् ।

1 SA, p. 75.

2 ABD omit श्री॰.

3 ननु गोकुलस्य वैभवरूपो गोलोक इति यदुक्तं भवता तदयुक्तम् । मया यदुक्तं गोलोकस्य प्रकटप्रकाशरूपं गोकुलं तदेव युक्तम् । यतः सितोपलानिर्मितवृक्षस्येव स्वर्णनिर्मितकुण्डलस्येव च । सितोपलाया अनादित्वं स्वर्णस्य नित्यत्वं वृक्षस्यानित्यता कुण्डलस्य विकार्यतानित्यता च यथा तथा गोकुलस्याप्रकाशत्वेऽनित्यता गोलोकस्याप्रकाशत्वेन नित्यता । अत एव यथा गोलोकनाथस्य नरलीलात्वाभावेन व्रजमागत्य नरलीलां कृत्वा पुनस्तत्र स याति तथा धाम्नः प्रकटप्रकाशत्वं भूत्वा पुनर्गोलोके गत्वान्तर्भूतो भवति । व्रजे तु विष्णुकृतलीलामाहात्म्यमस्ति लोकपावनाय तीर्थरूपेणेति चेत्तत्र वादिन उक्तधा वादिनं समादधाति सितोपलेति ।

4 वेदान्तमतम् ।

5 व्रजस्य स्वरूपलक्षणमेतदिति यावत् ।

6 व्रजस्य तटस्थलक्षणमेतत् ।

7 ACD omit it.

8 गोलोकस्य तटस्थलक्षणमेतदिति यावत् ।

9 गोलोकस्य स्वरूपलक्षणमेतत् ।

10 AD omit ॰रूप॰.

कथा गानं नाट्यं गमनमपि वंशी प्रियसखी
चिदानन्दं ज्योतिः परमपि तदास्वाद्यमपि च ॥१२॥
स यत्र क्षीराब्धिः सरति सुरभिभ्यश्च सुमहान्
निमेषार्धाख्यो वा व्रजति न हि यत्रापि समयः ।
5 भजे श्वेतद्वीपं तमहमिह गोलोकमिति यं
विदन्तस्ते सन्तः क्षितिविरलचाराः कतिपये ॥१३॥[1]

अस्यार्थः। श्रियोऽनुवादरूपाः[2] कान्ता विधेयरूपाः[3]। परमपुरुषोऽनुवादरूपः कान्तो विधेयरूपः। कल्पतरवोऽनुवादरूपा द्रुमा विधेयरूपाः। भूमिश्चिन्तामणिगणमयीति चिन्तामणिगणस्वरूपत्वमनुवादरूपं भूमिर्विधेयरूपा। अमृतमनुवादरूपं तोयं विधेयरूपम्। गाननाट्ये अनुवादरूपे 10 कथागमने विधेयरूपे। प्रियसख्यनुवादरूपा वंशी विधेयरूपा। चिदानन्दमनुवादरूपं ज्योतिर्विधेयरूपम्। परमन्यदपि तथास्वाद्यमपि च विधेयरूपं तच्चिदानन्दमनुवादरूपमेवमन्यदपि ज्ञेयम्। श्रीव्रजे त्वेतद्वैपरीत्यम्।[4]
[27a] यथा श्रीविल्वमङ्गले

चिन्तामणिश्चरणभूषणमङ्गनानां
15 शृङ्गारपुष्पतरवस्तरवः सुराणाम् ।
वृन्दावने व्रजधनं ननु कामधेनु-
वृन्दानि चेति सुखसिन्धुरहो विभूतिः ॥१४॥[5]

अस्यार्थः। चरणभूषणमनुवादरूपं चिन्तामणिर्विधेयरूपः। शृङ्गारपुष्पतरवोऽनुवादरूपाः सुराणां तरवो विधेयरूपाः। व्रजधनमनुवादरूपं काम-

1 BS, V. 56 with स्रवति for सरति.
2 व्यक्तरूपाः ।
3 अव्यक्तरूपाः ।
4 गोलोकस्यानुवादरूपत्वं व्रजे तु विधेयरूपत्वम् ।
5 This verse is attributed to Bilvamaṅgala, but not traced in the extant KK, nor in the second and third *Āśvāsas* of Pāpayallaya Sūri's text, nor in the *Bilvamaṅgalakośakāvya*.(*Op. Cit.* p.343). It is cited in BRS, p. 157 as attributed to Bilvamaṅgala. CC cites anonymously in II. 14.228.

धेनुवृन्दानि विधेयरूपाणि । व्रज स्थानां परिकराणां माधुर्यप्रेमोत्पादित-सर्वोत्कृष्टत्वानुभववतां तत्तदेकभोक्तृत्वेनानुवादरूपार्थानाम[1]नुसन्धानं । न तु विधेयरूपार्थानां श्री बि ल्व म ङ्ग ला दीनामैश्वर्यानुसन्धानात्तेषाम[2]र्थानाम-प्यनुसन्धानम् । ननु श्री व्र ज गो लो क योः पृथक्तया स्थानचतुष्टयं कथितम् ।
5 तर्हि गो लो क स्य कुत्र स्थितिः । एकत्र स्थित्या स्थानचतुष्टयत्वा-सिद्धे[3]स्तत्राह परमव्योमोपरि । यथा श्री ब्र ह्म सं हि ता यां

गो लो क नाम्नि[4] निजधाम्नि तले च तस्य[5]
दे वी म हे श ह रि धा[27b]मसु तत्र तत्र[6] ।
ते ते प्रभावनिचया विहिताश्च येन
10 गो वि न्द मादिपुरुषं तमहं भजामि ॥१५॥[7]

इति । श्री भा ग व ता मृ ते पा द्मो क्तिश्च[8] यथा[9]

अथ[10] तत्रस्था[11] न न्द गोपादयः सर्वे पुत्रदारादिसहिता वा सु दे व प्रसादेन दिव्यरूपधरा विमानमारूढाः परम वै कु ण्ठ लोकमवापुः ।[12]

इति ।

---

1 A inserts after it °प्यु°. D explains: चरणभूषणादीनाम्.

2 चिन्तामण्यादीनां विधेयरूपार्थानाम् ।

3 पूर्वोक्तं यद्गोकुलेऽन्तर्भूतवैभवस्वरूपं तदेव गोलोक इति चेत्तदा स्थानषट्कता भवति । एकत्र स्थित्या स्थानचतुष्टयता-सिद्धि रित्यर्थः ।

4 ब्रह्माण्डाद्ब्रह्म(मयो *Sic.*)धाम । तदुपरि महेशधाम । तदुपरि हरिधाम परव्योम । तदुपरि गोलोकः ।

5 गोलोकस्य ।

6 D तेषु तेषु for तत्र तत्र.

7 BS, V. 43.

8 B पाद्मोक्तच.

9 A omits it.

10 ननु परमव्योमोपरि गोलोकस्थितिरिति ब्रह्मसंहितावचनेनोदाहृता । तदा पाद्मोक्त-वचनेन कथं नन्दादीनां वैकुण्ठगमनं दर्शितमिति चेत्तत्रांशाभिप्रायेण प्रकटकाले य आगतास्ते वासुदेवप्रसादेन कृतार्थीभूय पुनस्तत्र गताः । व्रजेशादेरंशभूता ये द्रोणाद्या अवातरन्निति वक्ष्यमाणप्रमाणेन ज्ञेयाः । तदेव गोलोकगतत्वेन स्वयं प्रमाणयति यथाथेति ।

11 व्रजस्थाः ।

12 PP. VI. 279. 27 with °दारस° for °दारादिस°. Cited in LBA, pp. 166-67. A °लोकमापुः.

विनैक[1]त्वप्रदृष्टिं वै प्रकाशत्वं न सिध्यति ।
इति गोकुलगोलोकनाथैकत्वप्रदर्शनम् ॥१७॥

अत एव गोकुलनाथगोलोकनाथयोरेकत्वव्यञ्जिका लीला स्पष्टा । अत एव

5　　मुञि ना जानिमु ना जानिबे गोपीगण[2]

इति स्पष्टलीलानुसारेण गोलोकनाथवाक्यम् । यथा

मत्कामा रमणम्[3]

इत्यादि द्वारकानाथवाक्यम् । यथा द्वारकानाथे नन्दनन्दनावेशस्तथा गोलोकनाथे नन्दनन्दनावेशः । अत एव

10　　गच्छ देवि व्रजं भद्रे गोपगोभिरलङ्कृतम्[4]

इत्यादि स्पष्टलीलानुसारेण गोलोक [28a] नाथस्यैव वाक्यम् । तयोः[5] पृथक्त्वव्यञ्जिका लीला गूढा । तत्र[6] स्पष्टा द्विवि[7]धा · श्री[8] गोलोकगता श्री[9] व्रजगता[10] चेति । तत्र[11] गोलोकगता कैवलकैशोरगतत्वेनैकविधा । श्री व्रजगता तु त्रिविधा · बाल्यगता पौगण्डगता कैशोरगतेति ।

---

1 ननु धामलीलापरिकराणां सर्वेषां चेत्पृथक्त्वाचिन्त्यता नित्यता च तदाचिन्त्यशक्तिसर्वसम्भवकत्वेन कथमागत्यैकत्वप्राप्तत्वं · पृथक्कथं न विलसितत्वमिति चेत्तत्प्रकाशित्वज्ञापनायान्तरङ्गबहिरङ्गप्राप्त्युपदेशाय चेत्याह विनैकेति ।

2 CC, I. 4. 27 with आमिह for मुञि and जाने for जानिबे. The latter readings are also noticed there as variant. D gives its Sanskrit note: अहमपि न ज्ञास्यामि न गोपीगणोऽपि ज्ञास्यति.

3 BP, XI. 12. 13ᵃ. The full verse:
मत्कामा रमणं जारमस्वरूपविदोऽबलाः ।
ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः ॥

4 BP, X. 2. 7ᵃ⁻ᵇ.

5 गोकुलगोलोकयोः ।

6 BD अत्र.

7 AD omit ॰वि॰.

8 AD omit it.

9 B drops it.

10 C drops श्रीव्रजगता probably due to mistake.

11 स्पष्टाया द्वैविध्ये ।

तत्र[1] कैशोरगतायाः कादाचित्कत्वे बाल्यपौगण्डगत[2]योः कादाचित्कत्वं स्यात्। अत एव कैशोरगता लीला नित्या। अत एव गूढलीलानुसारेणात्र कारिका

व्रजेशादेरंशभूता ये द्रोणाद्या अवातरन्।

5 कृष्णस्तानेव वैकुण्ठे प्राहिणोदिति साम्प्रतम् ॥१८॥[3]

वैकुण्ठे गोलोके। पूर्वम्

अहो मधुपुरी[4]

इत्यादिपद्याभ्यां वैकुण्ठस्य गोलोकतया प्र[5]दर्शितत्वादत्र[6] परम-वैकुण्ठलोके गोलोक[7] इति न व्याख्यातम्। ननु गोलोकगत-

10 कैशोरलीलाया

वयसो विविधत्वेऽपि सर्वभक्तिरसाश्रयः।[8]

धर्मी[9] किशोर एवायं नित्यलीलाविलासवान् ॥१६॥[10]

इतिवचनाद्बाल्यपौगण्डविलासवलितत्वेन व्रजगतबाल्यपौगण्डलीलयोः कादाचित्कत्वे को दोष इति चेत्तत्राह

15 यथोत्तरम[28b]सौ स्वादविशेषोल्लासमय्यपि[11]

इतिवाक्याच्छृङ्गारस्य सर्वरसगुणवत्त्वेऽप्यन्येषां वत्सलादीनां रसानां नित्यत्ववत्किशोरस्य धर्मित्वेऽपि बाल्यपौगण्डतत्तल्लीलानां नित्यत्वम्। किन्तु[12] गोलोकगतकैशोरलीलाया ऐश्वर्यमयत्वात्तद्वलितस्य गोलोक-

---

1 ननु व्रजगता त्रिविधापि तन्मध्ये कैशोरगता तु गोलोके नित्या। व्रजे तु तत्प्रकाशत्वेन तदा गमनागमने न कैशोरगतायाः स्थायिता जाता। अत एव प्रकटसमये कदाचित्किशोरता न तु सदा किशोरता व्रज इति चेत्तत्राह तत्रेति।

2 D omits ॰गत॰.

3 LBA, p. 167.

4 Cited in LBA, p. 169. See *ante*, II. 6. See also II. 7.

5 BCD omit प्र॰.

6 कारिकायाम्।

7 C ॰के omitting इति after it.

8 C omits this line.

9 बाल्यपौगण्डयोर्धर्मः कैशोरे वर्तत इत्यर्थे धर्मी।

10 BRS(K), p. 19 with एवात्र for एवायं and नित्यनाना॰ for नित्यलीला॰.

11 BRS(K), p. 45.

12 ननु किशोरस्य धर्मित्वेऽपीति यदुक्तं भवता तन्ममैव मतपोषकम्। गोलोकेऽपि किशोरस्य सदा नित्यता। अतो गोलोकगतकिशोरस्यैव धर्मित्वं व्रजगतबाल्यादीनामिति चेत्तत्र न हि न हीत्याह किन्त्विति।

नाथस्य धर्मित्वसम्भावना कुतः[1]। स्पष्टलीलायां व्यतिरेकः। अन्यथा श्रीकृष्णोऽयं नारायणस्य विलासी। गो[2]लोकोऽस्य परमव्योमोपरि वर्तत इति दृष्ट्या या बहिर्मुखजनानां प्रवृत्तिः सा दुर्घटा स्यादिति। श्रीव्रजस्य गोलोकात्पृथक्ता। यथा तत्रैव तदनन्तरकारिकायां

5 प्रेष्ठेभ्योऽपि प्रियतमजनैर्गोकुलवासिभिः।
वृन्दारण्ये सदैवासौ विहारं कुरुते हरिः ॥२०॥[3]

इति व्यतिरेकः[4]। अन्यथा ब्रह्माण्डान्तर्वर्तिनृलोकमध्यस्थश्रीव्रजेन्द्र[5]-नन्दनत्वेन श्रीकृष्णमनुष्यत्वस्य या सदा स्फूर्तिस्तस्या अभावः। तस्मिन्[6] सति अयमीश्वरो वयमस्य[7] शक्तय[8] इति बुद्ध्या रतेः [29a]
10 समर्थात्वहान्या गौणसमञ्जसात्वापातः। गोलोकस्य पा[9]रमैश्वर्यमयत्वस्य परमव्योमोपरि स्थितेश्च सदा स्फूर्त्या तद्गतपरिकराणां श्रीनारायणस्य विलासी श्रीकृष्णोऽयमस्माकं प्रभुरिति सदा स्फूर्तिः। न त्वयमस्माकं सखा पुत्रः प्रणयविषयकान्तो वेत्यादिस्फूर्तिः। यथा वैकुण्ठं गतस्य गोपकुमारस्य श्रीनारायणे तत्तल्लीलाकरणेऽपि[10] न तथा स्फूर्तिः।
15 तद्यथा बृहद्भागवतामृते

तत्रैव सर्वज्ञशिरोमणिं प्रभुं
वैकुण्ठनाथं किल नन्दनन्दनम्।
लक्ष्म्यादिकास्ताः कलयामि राधिका-
मुखाश्च दासादिगणान् व्रजार्भकान् ॥२१॥[11]

---

1 कदाचिदपि नेत्यर्थः।
2 ABD omit गो॰.
3 LBA, p. 167.
4 B adds अभावे after it.
5 AC. श्रीव्रजेश्वर॰.
6 मनुष्यत्वस्य स्फूर्त्यभावे।
7 कृष्णस्य।
8 गोपिका इति (अपिना *Sic.*) शक्तय एव।
9 A प॰.
10 नन्दनन्दनलीलाकरणेऽपि।
11 BBA, II. 4. 110 with लक्ष्मीधराद्याकलयामि for लक्ष्म्यादिकास्ताः कलयामि in *c* and चन्द्रावलीद्यास्य for मुखाश्च दासादि॰ in *d*.

तथाप्यस्यां व्र ज द्रमायां प्रभुं सपरिवारकम् ।
विहरन्तं तथा नेक्षे खिद्यते स्मेति मन्मनः ॥२२॥[1]

कदापि तत्रो[2]पवनेषु लीलया
तथा लसन्तं निचितेषु गोगणैः ।
5 पश्याम्यमुं तर्ह्यपि पूर्ववत्स्थितं[3]
निजासने स्वप्रभुवच्च सर्वथा ॥२३॥[4]
तथापि तस्मिन्परमेशबुद्धे-
र्वै कु ण्ठ लो का गमनस्मृतेश्च ।
सञ्जायमानादरगौरवेण
10 तत्प्रेमहान्या स्वमनो न तृप्येद् ॥२४॥[5]

इ[29b]ति ।

कचिदैश्वर्यसाम्येन धाम्नोः प्रथमतुर्ययोः ।
ऐक्यं दर्शित मि न्द्रा द्यैर्मधुर्याणामकोविदैः ॥२५॥
वहिर्मुखप्रवृत्त्यर्थं कचित्तेन[6] तयो[7]र्हि तत् ।
15 तज्ज्ञेनापि दर्शयता वैलक्षण्यमदर्शितम् ॥२६॥

किञ्च ।[8] गो लो के रासदानादिलीला न सन्ति । समञ्जसारतिमतीभिः स्वस्त्रीभी रासदानादिलीलाकरणस्यायोग्यत्वाद् । आसां लीलानां महाभावविलासरूपत्वाच्च। अतो द्वा र का यामासाम[9]श्रवणाच्च गो लो कगत ल क्ष्मी चयस्य समञ्जसरतिमत्त्वम्[10] ।

20 श्रियः कान्ताः कान्तः परमपुरुषः[11]

इत्यादि ।

---

1 BBA, II. 4. 111.
2 वैकुण्ठे ।
3 D ०ति.
4 BBA, II. 4. 112 with कर्ह्यपि for तर्ह्यपि in *c.*
5 BBA, II. 4. 113.
6 ऐश्वर्यसाम्येन ।
7 व्रजगोलोकयोः ।
8 पूर्वं यदुक्तं गोलोकनाथस्य मनुष्यत्वाभावाद्धर्मिकिशोरत्वसम्भावना नास्ति तदेव द्रढयति किञ्चेति ।
9 रासादिलीलानाम् ।
10 युक्तम् ।
11 BS, V. 56a. See *ante*, II. 12.

लक्ष्मी सहस्रशतसम्भ्रमसेव्यमानम्[1]

इत्यादिपद्यव्यक्तपत्नीभावाभिमानस्य समञ्जसास्वरूपलक्षणरूपत्वात् ।

आसां गोलोक[2] लक्ष्मीणां रतेरस्या विवेचनम् ।
द्वितीयेऽनन्तरे[3] ज्ञेयं वैलक्षण्ये समुद्गतम् ॥२७॥

5 गोलोकस्य गोकुलात्पृथक्त्वस्य प्रयोजकत्वं श्रीकृष्णं परमेश्वरबुद्ध्या भजतां श्रीव्रज प्राप्त्ययोग्यतया तत्रैव गतेः ।

श्रीमद्गोकुलगोलोकप्राप्ति[30a]कारक[4]योर्द्वयोः ।
वैलक्षण्यं साधनयोर्लक्ष्यं तुर्ये चतुष्टये ॥२८॥

समर्थाद्वैरूप्यखण्डनसिद्धस्थानद्वैरूप्याभावादेकरूपस्य द्वैविध्यनिरसनं न
10 स्यादत एकस्यैव स्थानस्य प्रकटत्वाप्रकटत्वाभ्यां क्रमतः श्रीव्रजतया गोलोकतया द्वैविध्यमस्त्वित्याशङ्क्य वैलक्षण्यप्रकटनेन श्रीव्रज-गोलोकयोर्द्वैरूप्यप्रदर्शनम् ।

गोलोकस्य पृथक्त्वां श्रीग्रन्थकृद्भिः स्फुटं व्रजात् ।
द्वैविध्यं श्रीव्रजस्यास्य दर्शयद्भिर्निराकृतम् ॥२९॥

15 अर्थापत्त्यलङ्कारेण कैमुत्यन्यायेन च स्पष्टविमतनिरसनसिद्धिः सुतरामत्र तृतीयवैलक्षण्ये च द्वितीयनिरसने च जाता । अत्र द्वितीयधामावकरनिरसनं जातम् । तेन चतुर्थलीलावकरनिरसनं जातम् । तेन चतुर्थसाधनावकर-निरसनमपि जातम् ।[5] इति वैलक्षण्यचतुष्टये श्रीव्रजगोलोकयो-र्वैलक्षण्यं प्रथमं पूर्णम् ॥

1 BS, V. 29c.
2 C drops लक्ष्मीसहस्र॰ गोलोक॰.
3 प्रथमवैलक्षण्यस्य निकटे ।
4 A ॰रण॰.
5 C omits तेन चतुर्थलीला॰ जातम्.

वन्दे श्री रा धि का दीनां रतिमास्वादनं विना ।
नैरपेक्ष्यं यदन्यत्र यस्या नैव मनाक्कचित् ॥३०॥

अथ परकीयाततिकात्यायनीव्रतपरकन्यकाततिरत्योर्वैलक्षण्यम् ।

यदि गो[30b] लो क गतासु श्री कृ ष्ण प्रियासु मुख्या समञ्जसा स्यात्तदा द्वा र का यां पाणिग्रहणादिनरलीलाया अप्रयोजकत्वं स्यात् । यदि श्रीकृ ष्णे पतिभावासु का त्या य नी व्रतपरासु कन्यासु केवलसमञ्जसा स्यात्तदा प्रच्छन्नकामताया व्र जो त्कर्षस्य चाप्रयोजकत्वं स्यात् । यदि च तासु समर्था[1] स्यात्तदा परकीयाणां कन्यानां परकीयात्वस्याप्रयोजकत्वं स्यात् । यदि परकीयासु कन्यासु सर्वथा समर्था[2] स्यात्तदा परोढात्वस्याप्रयोजकत्वं स्यात् । यदि कु रु क्षे त्रा दिगतासु परोढासु मुख्यसमर्था स्यात्तदा व्र जो[3] त्कर्षस्याप्रयोजकत्वं स्यात् । यदि[4] व्र ज दे वी मात्रत्वेन समर्था स्यात्तदा परकीयात्वादेरप्रयोजकत्वेन किं परकीयात्वादिना । स्वकी[5]यात्वा[6]दि कथं न स्यात् । परकीयाणां परमोत्कर्षस्य स्वकीयानां तदभावस्य हेतुभूते क्रमेण[7] समर्थासमञ्जसे । अन्तरङ्गमनोवृत्तिविशेषयोर्न तु केवलपाणिग्रहणतदभावमात्रयोर्बहिरङ्गयोः स्वीयात्वपरकीयात्वहेतुत्वात् ।

आर्या चेदतिवत्सला मयि मुहुर्गोष्ठेश्वरी किं ततः[8]

इत्यत्र

दीव्यत्यत्र न चे दु मा व्रतफलं पिच्छावतंसी पतिः[9]

इति मनोवृत्तेरेवोदाहरणम् । अतो यथा

---

1 D समर्थाप्रायाः.

2 CD सा. D explains सा as समर्था.

3 D व्रजस्यो॰.

4 ननु धात्री वैलक्षण्येनैव तत्सम्बन्धेन तत्तत्परिकराणां प्रेयसीनां साजात्येनैकस्मिन्धाम्नि वर्तमाना परोढा वा कन्या वा । सर्वासां रतिसाजात्यमेव नेत्याह यदीति ।

5 ABD स्वी॰.

6 BD omit ॰त्वा॰.

7 D omits it.

8 Cited in UN, pp. 51-52.

9 *Loc. Cit.*

वैधी रागानुगा च[1]

इति साधनस्य द्वैविध्येऽपि स्थानानां चातुर्विध्यात्तयोश्चातुर्विध्यमपेक्षितं स्यात्। एवं समञ्जसासमर्थयोर्द्वैविध्येऽपि स्वकी[2]यायास्त्रैविध्येन परकीयाया द्वैविध्येन[3] समञ्जसायास्त्रैविध्यं समर्थाया द्वैविध्यमपेक्षितं स्यात्। स्वकीयायां समर्थायाः सद्भावे समञ्जसाया अप्रयोजकत्वं स्यात्। किञ्च।[4] गो लो क गत ल क्ष्मी चया द्वा र का स्थपट्टमहिषी-चयस्योत्कर्षस्य ' द्वा र का गतपट्टमहिषीचया द्व ज स्थानां का त्या०य नी-व्रतपराणां कन्यानामुत्कर्षस्य ' का त्या य नी व्रतपराभ्यः कन्याभ्यः[5] परकीयाणां कन्यानामुत्कर्षस्य ' परकीयाभ्यः कन्याभ्यः साधनपराणामपि ' किमुत नित्यप्रियाणां परोढानामुत्कर्षस्य हेतुरपेक्षितः प्रयोजनञ्चापेक्षितम्। पात्र[6]वैशिष्ट्यनिमित्तोद्गतरतिवैशिष्ट्यमेवात्र हेतुरूपम्। अन्यथा व्र जे स्वीया वा परकीया वा स्या द्व ज सम्बन्धमात्रेण तयोः समर्था [31b] स्याद्' द्वा र का यां स्वीया वा परकीया वा स्या द्वा र का सम्बन्धमात्रेण तयोः समञ्जसा स्यादित्येवालिखिष्यत्[7]। न व वृ न्दा व न गतायां श्री[8] रा धि का यां समञ्जसामदर्शयिष्यत्। कु रु क्षे त्र गतासु[9] रा धि का-द्यासु समर्थाभावमदर्शयिष्यत्। व्र जे का त्या य नी व्रतपराणां कन्यानां परकीयाणां कन्यानां परोढानाञ्च तारतम्यं[10] नादर्शयिष्यत्। सगणां स्वेष्टां श्री रा धां का त्या य नी व्रतपरासु कन्यास्वगणयिष्यत्।

अत एव समर्थालक्षणव्यतिरेकातिशय[11]किञ्चिदन्वय[12]किञ्चिद्व्यतिरेक[13]-गम्या रतिभेदाः प्रकाश्यन्ते। तत्र समर्थालक्षणव्यतिरेकेण प्रतियोगिताप्राप्त-

1 BRS(K), p. 3.

2 BD स्वी०.

3 मुख्यपरकीया गौणपरकीयेत्येवं द्वैविध्येन।

4 ननु भवतु स्वीयायां समर्था किन्तु शक्ति-शक्तिमतोरैक्याद्गोलोकगतानां प्रियाणां सर्वत उत्कर्ष इति चेत्तन्न नेत्याह किञ्चेति।

5 ABC omit it.

6 ननूत्कर्षहेतुस्वरूपज्ञानं किन्तावदित्यत्र पूर्वोक्तरतिस्वरूपभेद एव पात्रादिसमस्त-भेदकारणम्। तदेव बीजाङ्कुरन्यायेनो-त्कर्षहेतुत्वेन निरूपयति पात्रेति।

7 B omits ०द्वारकासम्बन्ध० लिखिष्यत्.

8 ACD omit it.

9 गौणसमर्थासु।

10 B पारतन्त्र्यं..

11 गोलोकलक्ष्मीचयानाम्।

12 कात्यायनीव्रतपराणाम्।

13 परकीयाणां कन्यानाम्।

लक्षणस्य गौणतया तदतिशयप्राप्तो गौणी समञ्जसेति रतिभेदः । लक्षणगौणत्वं लक्षितगौणत्वात् । तत्तु निरन्तरैश्वर्यानुसन्धानेन रतेः सङ्कोचान्न तु सामञ्ज[1]स्यगौणत्वात् । तल्लक्षणकिञ्चिदन्वयप्राप्तः समञ्जसाप्रायेति रतिभेदः । तल्लक्षणकिञ्चिद्व्यतिरेकप्राप्तः समर्थाप्रायेति रतिभेदः । किञ्च[2]
5 तल्लक्षणप्राप्तस्वरूपकार्ययोरा[32a]गन्तुकत्वेन[3] प्राप्त[4] आगन्तुकी समर्थेति रतिभेदः । समर्थोत्कर्षहेतुश्री व्र जा दन्यत्र तु तदुत्कर्षहान्या तल्लक्षणगौणत्वापत्त्या प्राप्तो गौणी समर्थेति[5] रतिभेदः । तल्लक्षणमुख्यताप्राप्तः समर्थेति[6] रतिभेदः ।[7] तल्लक्षणव्यतिरेकेण प्रतियोगिताप्राप्तलक्षणप्राप्तः समञ्जसेति रतिभेदश्च मुख्यतया लक्षित उदाहृतश्च । परोढानां रतिमपेक्ष्य परकीयाणां
10 कन्यानां रतौ किञ्चिद्वैजात्यम् । का त्या य नी व्रतपराणां कन्यानां रतौ किञ्चित्साजात्यम्[8] । महिषीणां रतौ सर्वथा वैजात्यं । गो लो क-गत ल क्ष्मी णां रतौ[9] सर्वथा वैजात्यातिशयः[10] । क्रमेण पतित्याग-रूपासामञ्जस्याभावात् । परकीयाणां कन्यानां रतौ किञ्चित्साजात्यं[11] लोकत्यागरूपासामञ्जस्यसद्भावात् । लोकधर्मपतित्यागाभावेन सर्वथा
15 सामञ्जस्यात्सर्वथा सामञ्जस्येऽपि रु क्मि ण्या दिकृतविरोधतिरस्कारा-भावात् । अत एव क्रमेण सम्यक्सामर्थ्याभावात्किञ्चित्सामर्थ्या-त्सम्यगसामर्थ्यातिशयात् । अत एव क्रमेण किञ्चिन्निसर्गवलितस्वरूपो-त्पन्नत्वात्किञ्चित्स्वरूपवलितनिसर्गोत्पन्नत्वात्सर्वथामुख्यनिसर्गोत्पन्नत्वात्सर्व-थागौणनिसर्गोत्पन्नत्वाद् । अत एव क्रमेण महाभावोपादाने योग्यता-
20 सम्यक्काया अभावात्किञ्चिद्योग्यतायाः [32b] सद्भावात्सम्यगयोग्यतातः[12]

---

1 B inserts after it ०स०.

2 अवान्तररतिभेदमाह । ननु समर्थालक्षण-प्राप्तस्वरूपकार्यत्वे श्रुतिमुनिचन्द्रकान्ति-देवीप्रभृतीनामागन्तुकीति स्वरूपलक्षण-मायातम् । तन्मध्ये काचित्कुरुक्षेत्रगता काचिन्निभोगतेति तात्पर्याज्ज्ञेयमित्याह किञ्चेति ।

3 आधुनिकत्वेन ।

4 श्रुतिमुनिप्राप्तः ।

5 कुरुक्षेत्रगतासु नववृन्दावनगतासु ।

6 राधिकादिषु परोढासु ।

7 C drops समर्थोत्कर्ष० रतिभेदः.

8 समर्थायाः ।

9 BD insert here समर्थालक्षण०.

10 नरलीलाया अभावात् ।

11 A omits परकीयाणां० साजात्यं.

12 महिषीणां सर्वथा वैजात्यम् ।

सम्यग्योग्यातिशयात्[1]। परोढासु नित्यप्रियाणां रतिमपेक्ष्य देवीनां श्रुतिमुनितदितरसाधकचरीणाञ्च रतौ सर्वथा साजात्येऽपि न्यूनत्वम्। आगन्तुकत्वेनागन्तुकस्वरूपोत्पन्नत्वात्। तत्तु मनस्तादात्म्यप्राप्तेः।[2] स्वाभाविको नित्यसिद्धः। आगन्तुकः साधनादिसिद्धः।[3] मुनिश्रुतिदेवीतरसाधकचररूप साधनसिद्धाधिष्ठानकतयैव नित्यसिद्धाधिष्ठानकस्य भाकस्यागन्तुकत्वं

नित्यसिद्धस्य भावस्य प्राकट्यं हृदि साध्यता[4]

इति वचनात्।

आगन्तुकोऽपि माञ्जिष्ठरागो वस्त्रे यथा स्थिरः[5]।
एवं देव्यादिषु स्थायी भाव आगन्तुकः स्थिरः ॥३१॥

न तु पटादिगतान्यरक्तिमसदृशव्यभिचारिभाववदस्थिर एवः। मञ्जिष्ठामाञ्जिष्ठवाससोर्यथा रागवत्त्वे तारतम्यमेवं नित्यप्रियाणां देवीमुनिश्रुतिसाधकचरीणाञ्च समर्थारतिमत्त्वे तारतम्यम्। किञ्च[6] माञ्जिष्ठे वाससि वासस्त्वसत्त्वम्। साधकचरीषु न जीवत्व[7]सत्ता स्वरूपशक्तित्वापातात्। स[8] तु साधनस्यान्यथा कर्त्तुं समर्थत्वस्य [33a] प्रकाशकः। किन्त्वा[9]-गन्तुकस्वरूपजापि रतिः समृद्धा सती निजाधिष्ठानस्य स्वतादात्म्यप्रापणेन माञ्जिष्ठवासोरागवत्त्ववत्स्ववत्त्वतिरोधापनान्मञ्जिष्ठारागवत्त्ववत्त्ववत्ताविस्फाराच्चागन्तुकीतिपदवाच्यत्वमपहाय[10] नित्यसिद्धाधिष्ठानकरतिवत्[11] स्वरूपजेतिपदवाच्यत्वं प्राप्नोति। माञ्जिष्ठवासोरागवत्त्ववत्त्ववत्त्वतिरोधापनं यथा

1 गोलोकलक्ष्मीणां सर्वथा वैजात्यातिशयः।

2 C omits तत्तु ॰स्तादात्म्यप्राप्तेः.

3 A adds after it अधिष्ठानकस्य and C, अधिष्ठानस्य.

4 BRS(K), p. 3.

5 C स्थितः.

6 ननु प्राप्तसिद्धित्वेऽपि तारतम्यमपेक्षितं यत्तदेव नश्वरानश्वरभावेन स्वरूपशक्तिजीवशक्तिमत्त्वं गम्यमित्यत नेत्याह किञ्चेति।

7 B जीववत्त्व॰.

8 स्वरूपशक्तित्वापातः।

9 D किन्त्वा॰.

10 CD omit आगन्तुकीति॰ मपहाय.

11 C adds after it सहज॰.

जहुर्गुणमयं देहम्[1]

इति ।

आगन्तुकस्वरूपाढ्यस्तावत्साधनसिद्धिभाक् ।
यावन्मनःस्वताहेतोर्महाभावस्य नोदयः ॥३२॥

5 साधकानां समर्थायां निसर्गोत्पन्नता भवेत् ।
इत्येतद्विमतं स्पष्टं स्फुट[2]मत्र निराकृतम् ॥३३॥

श्रीव्रजस्थानां नित्यप्रियाणां रतिमपेक्ष्य प्रकाशान्तरेण कुरुक्षेत्रादि[3]-
गतानां तासामेव रतौ गौणत्वं । तत्र श्रीवृन्दावनादेर्मुरलीमाधुर्या-
देरभावाच्छ्रीकृष्णस्याप्रच्छन्नकामताविशिष्टरुक्मिण्यादिगतसमञ्जसा-
10 [33b]विषयत्वस्पष्टमहासमृद्धिहस्त्यश्वादिमत्त्वयोरनुभवाच्च[4] । तथा हि

प्रियः सोऽयं कृष्णः सहचरि कुरुक्षेत्रमिलित-
स्तथाहं सा राधा तदिदमुभयोः सङ्गमसुखम् ।
तथाप्यन्तःखेलन्मधुरमुरलीपञ्चमजुषे
मनो मे कालिन्दीपुलिनविपिनाय स्पृहयति[5] ॥३४॥[6]

15 इति ।[7]

वृन्दावनेश्वरी प्रेम्णा द्विभुजः क्रियते हरिः[8]

इत्यादिवदत्र[9] न मुरलीवादन[10]त्वादिसम्पादनसामर्थ्यम् । तदेव[11] समर्थाया
गौणत्वस्य व्यञ्जकम् । परकीयासु कन्यासु समर्थाप्राया । समर्थालक्षण-
किञ्चिद्व्यतिरेकादेव समग्रतल्लक्षणास्पदपरोढातः परकीयाणां कन्यानामप-
20 कर्षात् । अपकर्षस्तु परोढोत्कर्षव्यतिरेकप्राप्यः । परोढोत्कर्षो यथा

---

1 BP, X. 29. 11c.
2 BD स्पष्ट॰.
3 C ॰क्षेत्र॰.
4 ACD ॰भावाच्च.
5 B omits कृष्णः सहचरि॰ स्पृहयति.
6 PA, 383, p. 176.
7 B adds after it परकीयासु कन्यासु.
8 UN, p. 104.
9 कुरुक्षेत्रे ।
10 ABD ॰वदन॰.
11 असामर्थ्यम् ।

एताः सर्वातिशायिन्यः शोभासाद्गुण्यवैभवैः ।
र मा दिभ्योऽप्युरुप्रेममाधुर्यभरभूषिताः ॥३५॥[1]

इत्यादिकारिका ।[2] तदुदाहरणं[3] यथा श्री द श मे

नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः
स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः ।
रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठ-
लब्धाशिषां य उदगाद् व्र ज सु न्द री णाम् ॥३६॥[4]

इति । तत्र परोढात्वं निमित्तम्[5] । सर्वातिशायित्वादिकं नैमित्तिकम्[6] । परोढात्वनिमित्ताभावे सर्वातिशायित्वादिनैमित्तिकाभा[34a]व इति । का त्या य नी व्रतपरासु कन्यासु समञ्जसाप्राया समर्थालक्षणकिञ्चिद-न्वयादत एव प्रायिकसमञ्जसालक्षण[7]व्याप्तेश्चात एव स्वकी[8]यात्वतो महिषीसाहित्येन वर्णितत्वाच्च । अत एव

अत्रैव परमोत्कर्षः शृङ्गारस्य प्रतिष्ठितः[9]

इति नियतशृङ्गारपरमोत्कर्षहानेश्च ।

त्रैलोक्यविलक्षणाः[10]

इति नियतत्रैलोक्यवैलक्षण्यहान्या तत्सालक्षण्यापाताच्च । तल्ल[11]क्षण-किञ्चिद्व्यतिरेकास्पद्कन्यापरकीयाभ्यः का त्या य नी व्रतपराणां कन्या-नामपकर्षात् । अपकर्षस्तु कन्यापरकीयोत्कर्षव्यतिरेकप्राप्यः । कन्या-परकीयोत्कर्षो यथा

---

1 UN, p. 62. The Berhampur edition of UN, p. 84 with ०सौन्दर्य० for ०माधुर्यः in *d*.
2 AC omit it.
3 ABC omit it.
4 BP, X. 47. 60 with ०व्रजवल्लवी-नाम् in *d*.
5 बीजत्वम् ।
6 वृक्षत्वम् ।
7 C ०लक्षणा०.
8 ABD स्वी०.
9 UN, p. 14.
10 Cited in UN, p. 53. See *ante*, p. 87, foot note, 10.
11 समर्था ।

श्रीमुखेन तु माहात्म्यमासां प्राह स्वयं हरिः[1]

यथा

न पारयेऽहं निरवद्यसंयुजाम्[2]

इत्यादि ।

5 उद्धवोऽपि जगौ सुष्ठु सर्वभागवतोत्तमः[3]

यथा

आसामहो चरणरेणुजुषामहं स्याम्[4]

इत्यादि च । अत्र सामान्यपरकीयाणामुत्कर्षेण तद्भेदरूपाणां कन्यापरकीयाणामुत्कर्ष आयातः । किञ्च परोढानां साहित्यात्स[5] च नितरामायातः ।
10 साक्षादप[6]कर्षोऽ[7]पि

मूलमाथुरमाहात्म्ये श्रूयते [34b] तत एव हि ।
रुक्मिण्युद्वाहतः पूर्वं तासां परिणयोत्सवः ॥३७॥[8]

इत्यनेन[9] समर्थाकिञ्चित्साजात्यस्यापगमात् ।

प्रभावं श्रीव्रजस्यास्य वक्तुं शक्नोति कः पुमान् ।
15 यस्मिन्समञ्जसाप्रायरतेर्न हि परात्परे ।
ऐश्वर्यानुसन्धिसम्पर्करहितायाः समन्ततः ॥३८॥
सदोद्दीपनसद्भावाद्विघ्नतावसरः[10] क्वचित् ।
सम्भोगेच्छाविशेषस्य सदा लीनतया सतः ॥३९॥

---

1 UN, p. 57.

2 BP, X. 32. 22a. See for the full verse *ante*, I. 66.

3 UN, p. 57.

4 BP, X. 47. 61a. See for the full verse *ante*, I. 34.

5 उत्कर्षः ।

6 D here adds ०र० .

7 स्वकीयानां कन्यानाम् ।

8 UN, p. 12.

9 C इत्यन्ते.

10 D ०रसः.

अत्र[1] भेदे व्यतिरेकप्रदर्शनम्। अन्यथा स्वीयात्वे स्थापन[2]स्याप्रयोजकत्व-मिति। अनुमानप्रयोगोऽत्र। इयं रतिः समञ्जसा स्वीयात्व[3]गतत्वादिति। एवमन्यत्रापि।

नित्यप्रियात्वश्रैष्ठ्येऽपि राधादीनां हि वस्तुतः।
5 स्वीयात्वं कथ्यते यत्तु धन्यादिकन्यकागणे।
अत्राभिमान[4]भेदस्य हेतुत्वं विज्ञसम्मतम् ॥४०॥

अन्यथा तटस्थायमानः सिद्धान्तकृद्भिर्बहिरङ्गजनसमाधानाय श्रीराधिका-दीनां गोपैः सह परिणयस्य योगमायाविवर्तत्वं दर्शयद्भिः श्रीराधिका-दीनां[5] श्रीकृष्णेन सह माल्यपरिवर्तनकौतुकादिकं वारं वारं दर्शयद्भिश्च
10 श्रीग्रन्थ[35a]कृद्भिर्गान्धर्वरीतिस्वीकारेण धन्यादिषु यद्वस्तुतः स्वीयात्वं लिख्यते तत्तु न सम्भवेदिति। किञ्च

अव्यक्तत्वाद्विवाहस्य सुष्ठु प्रच्छन्नकामता[6]

इति। अस्यार्थः। सुष्ठिति कन्यात्वेन कामस्यापि मननाभावात्प्रच्छन्नकाम-तेति। तस्मादेव निरोधाभावेन वारणदुर्लभत्वयोरभावात्सैव[7] केवलेत्यर्थः।

15 हरिणा पूरिताभीष्टाः[8]

इत्यादिपद्यार्धस्यार्थः। पूरितोऽभीष्टः स्वस्मिन्पतिभावो यासां ताः

---

1 सम्भोगेच्छाया विशेषे।

2 श्रीमदुज्ज्वलनीलमणौ ' गान्धर्वरीत्या स्वीकारात्स्वीयात्वमिह वस्तुतः (UN, p. 52) इत्यादिना निर्णीतस्य वचनस्य।

3 AB omit ०त्व०. C स्वकीया०.

4 ननु वस्त्रहरणलीलायां राधादीनां साहित्यात्कथं धन्यादीनां स्वीयात्वं राधादीनां परोढात्वम्। कथं वा भित्तिचित्रे विश्वकर्मणा राधाललिता लिखिता। श्रीललितमाधवे श्रीकृष्णः श्रीसत्यभामां प्रति परिहासं कृतवान्कथ-मित्यत आह अभिमानेति।

5 BD omit this.

6 UN, p. 52. See for the full verse *post*, II. 45.

7 प्रच्छन्नकामता।

8 UN, p. 60. The full verse is
तत्र दुर्गाव्रतपराः कन्या धन्यादयो मताः।
हरिणा पूरिताभीष्टास्तेन तास्तस्य वल्लभाः॥

पतिभावरता हरौ[1]

इत्यादेस्तेन न तु परकीयाणामिव रसपरमोत्कर्षेण वल्लभाः प्रियाः।

न पतित्यागजं दुःखं न धर्मत्यागजं हि तत्।
पतिश्वश्रूननान्दॄणां न रोध[2]स्तद[3]भावतः ॥४१॥
5 मातामहीमातृपितृरोधो बाल्यधिया न हि।
मात्रादीनान्तु तज्ज्ञाने भवेत्परिणयोद्यमः ॥४२॥
रागस्य परमेयत्तापन्नवृत्तेरभावतः।
न समर्था महाभावबीजं स्यादत्र प्रायशः ॥४३॥
स्वीयात्वमत्र कृष्णे च पतित्वं वास्तवं ततः।
10 पात्रवैशिष्ट्यमादर्श्य श्रीमत्प्रभुवरैः किल।
व्यञ्जितं रतिवैशिष्ट्यं बोध्यं तत्पादसंश्रयैः ॥४४॥

ननु यथा स्वर्णर[4]जतकुण्डलयोर्वस्तुतो भेदेऽप्याकारसालक्षण्येन कुण्ड[35b]-लपदवाच्यत्वं तथा परकीयास्वकीययोर्वस्तुतो भेदेऽप्यभिमानसालक्षण्यात्[5] समर्था[6]पदवाच्यत्वम्। यथा

15 गान्धर्वरीत्या स्वीकारात्स्वीयात्वमिह वस्तुतः।
अव्यक्तत्वाद्विवाहस्य सुष्ठु प्रच्छन्नकामता ॥४५॥[7]

इति। तत्राह। अभिमानस्य वैलक्षण्यमेवात्र न तु सालक्षण्यम्। यथा

आर्या चेदतिवत्सला[8]

इत्यादिपद्य आर्येति पिच्छावतंसी पतिरि[9]त्यभिमानवलक्षण्यमेवात्र स्वकीया-
20 त्वे[10] हेतुः। स यथा

1 UN, p. 51. The full verse is: याश्च गोकुलकन्यासु प्रतिभावरता हरौ। तासां तद्वृत्तिनिष्ठत्वात्र स्वीयात्वमसाम्प्रतम् ॥

2 B निरोध॰ for न रोध॰.

3 पत्यादीनाम्।

4 B ॰रा॰, C स्वार्णरा॰.

5 स्वकीयापरकीयाकन्यानामन्यगोपैः सह विवाहस्याभावेऽभिमानसालक्षण्याद्द्वयं श्रीकृष्णस्य प्रिया इति।

6 ABD insert ॰श्रय॰.

7 UN, p. 52.

8 Cited in UN, pp. 51-52.

9 *Loc. cit.*

10 A ॰त्व॰.

आसां[1] तद्वृत्तिनिष्ठत्वान्न स्वीयात्वमसाम्प्रतम्[2]

इति। किञ्च। पतिभावरतिर्निमित्तरूपा। स्वकीया[3]वृत्तिनिष्ठत्वं नैमित्तिकम्। एतन्निमित्तं स्वकीयात्वं नैमित्तिकम्। अत एव पतिभावरतिहेतुकगान्धर्वविवाहं सम्पाद्य पत्नीभावाभिमानहेतुकमार्या चेदतिवत्सलेति पिच्छावतंसी पतिरिति श्री[4] व्र जे श्व र्या मार्यात्वमननं श्री कृ ष्णे पतित्वमननञ्च। एतद्धेतुको द्वा र का यां परिणयोत्सवः[5]। ल लि त मा ध वे तु यः सर्वासां परिणयोत्सवः[6] स तु बहिरङ्गजनसमाधानाय यो ग मा या-द्वितीयवृत्ति[7]कृतो द्वा र का यां श्री रा धि का दीनां [36a] गमनाभावात्। एव[8] तु वास्तव इति। महिषीषु मुख्यसमञ्जसा समर्थालक्षणव्यतिरेकात्। तल्लक्षण[9]किञ्चिदन्वयास्पद का त्या य नी व्रतपरकन्याभ्यो महिषीणामपकर्षात्। अपकर्षस्तु का त्या य नी व्रतपरकन्योत्कर्षव्यतिरेकप्राप्यः। का त्या य नी व्रतपरकन्योत्क[10]र्षो यथा

अव्यक्तत्वाद्विवाहस्य सुष्ठु प्रच्छन्नकामता[11]

इति। गो लो क गतासु ल क्ष्मी षु गौणी समञ्जसा समर्थालक्षणव्यतिरेकातिशयात्। तल्लक्षणव्यतिरेकास्पदमहिषीभ्यो गो लो क-गत ल क्ष्मी णामपकर्षात्। अपकर्षस्तु महिष्युत्कर्षव्यतिरेकप्राप्यः। महिष्युत्कर्षो यथा

स तर्जतु बताग्रजस्त्यजतु मां सुहृन्मण्डलः
पिता किल विलज्जतां घनदगम्बुरम्बास्तु मे।
मनः सखि समीहते श्रुतगुणश्रियं सर्वथा
तमेव य दु पुङ्गवं न तु कदापि चैद्यं नृपम् ॥४६॥[12]

1 आसां गान्धर्वविवाहितानां कन्यानाम्।
2 UN, p. 51 with तासां for आसां.
3 C omits it.
4 CD omit श्री॰.
5 कन्यानां मूलमाधवमाहात्म्योक्तः।
6 C omits this.
7 आच्छादिका।
8 मूलमाधवमाहात्म्योक्तकन्यापरिणयोत्सवः
9 D ॰ण॰.
10 C ॰व्रतपरोत्क॰.
11 UN, p. 52. See *ante*, II. 45.
12 Cited in UN, p. 401. LR in UN, (*op. cit.*) mentions it as narrated by R u k m i ṇ ī.

इति। विरोध[1]तिरस्कारान्मुख्या समञ्जसात्र[2] व्यक्ता। अत एव साक्षादपकर्षोऽपि[3]

यत्र श्रीशतनिन्दिप[36b]द्महिषीवृन्दैः प्रभुः खेलति[4]

इति। किञ्च[5] साधनपराणां परोढाप्र[6]भेदरूपत्वाद्द्विविधानां[7] कन्यानां साधनपरेति प्रभेदाभावाच्चासामनुगत्या भजनं नास्तीति गम्यते। अन्यथा श्री गो स्वा मि पादैर्द्विविधानां तासां साधनपरेति प्रभेदो दर्शितोऽभविष्यत्।

समञ्जसानुगा[8]योगं न समर्थानुगां क्वचित्।
प्रापयेत्साधको विज्ञस्तद्योगे सापि तन्मयी[9] ॥४७॥

मूल मा ध व माहात्म्ये श्रूयते तत एव हि।
रु क्मि ण्यु द्वाहतः पूर्वं तासां परिणयोत्सवः ॥४८॥[10]

इत्युत्थापनस्य समञ्जसानुगायुक्तसमर्थानुगया श्री व्र ज प्राप्तिश्चेत्तदाप्रयोजकत्वं स्यात्।

अग्निपुत्रा म हा ल क्ष्मीः कन्या दुर्गार्चनापराः।
श्रीसमर्थानुगामार्गव्यतिरेकप्रदर्शने।
फलान्यथात्वलाभेन प्राप्तोदाहरणीयताः[11] ॥४९॥

---

1 ACD विशेष॰ D explaining it as विरोध.

2 द्वारकायाम्।

3 लक्ष्मीणाम्।

4 SA, p. 75. See *ante*, II. 11.

5 ननु भवतु। सिद्धानां सर्वासां कृष्णप्रियाणां समर्थासमञ्जसागौणमुख्यप्रायात्मिकानां मध्येऽनुकरणन्त्विदानीन्तनसाधककर्तव्यत्वे कस्याः सिद्धं भविष्यतीत्यपेक्षायां नित्यसिद्धानामेव न तु साधनसिद्धानामित्याह किञ्चेति।

6 D omits ॰प्र॰.

7 जहुर्गुणमयं देहम् (BP, X. 29. 11c.) इत्यत्र गोपीनाम्।

8 ननु व्रजेऽपि समर्थासमञ्जसयोः सद्भावोऽस्ति। तर्हि समर्थासमञ्जसयोरेकतरानुसारेण साधनेन श्रीव्रजप्राप्तिः स्यादिति चेत्तत्राह समञ्जसानुगेति।

9 समञ्जसामयी।

10 UN, p. 12.

11 फलान्तरं प्राप्ताः स्मरणमाहात्म्यात्। [अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे]। भर्तारञ्च जगद्योनिं वासुदेवमजं विभुम्॥ (Cited elsewhere as from *Kūrma Purāṇa*) इत्यादिना स्थानान्तरप्राप्तेर्दर्शितत्वात्।

किञ्च। कात्यायनीव्रतपराणां कन्यानां रतेर्महाभावोत्पादने किञ्चि-द्योग्यतायाः सद्भावेऽपि न स्वल्पोऽपि महाभावोदयः। तासां[1] कन्यात्वेन मौग्ध्यान्नववयःकामत्वादेः। तथा परकी[37a]याणां कन्यानां रतेर्महा-भावोत्पादने प्रायिक्या योग्यतायाः सद्भावेन महाभावस्योदयेऽपि न स परोढानां महाभावोदय इव चमत्काराश्रयः। एतस्मात्पूर्वस्माच्च[2]। अत एव रासे[3] द्वयोरपि कन्याप्रभेदयोरनौपयिकत्वप्रायत्वात्।

नायं श्रियोऽङ्ग उ नितान्तरतेः[4]

इत्यादिपद्यं परोढोत्कर्षे उदाहृतम्। देवीनां साधकचरीणाञ्च[5] रतेर्महा-भावोत्पादने सम्यग्योग्यतया महाभावस्य सम्यगुदयस्तथापि न स[6] नित्य-प्रियाणां महाभाव इव परमचमत्कारातिशयाश्रयः। किन्तु नित्यप्रियाः स्व-सङ्गप्रभावकारुण्याभ्यां सजातीयभावाः साधनसिद्धाः सर्वथैव स्वसाम्यं प्रापयेयुः। कुरुक्षेत्रादि[7]गतानां नित्यप्रियाणां रतेर्मुख्यताहानेर्गौण-तापातान्महाभावस्योत्कर्षहानिः। किञ्च

इयमेव रतिः प्रौढा महाभावदशां व्रजेद्[8]

इत्यत्रैवकारेण गौणी समञ्जसा[9] मुख्यसमञ्जसा[10] समञ्जसाप्राया[11] च निवारणादिनापि [37b] महाभावदशां न व्रजेदिति व्यज्यते। अयोग्याति-शयाद्योग्यतातोऽ[12]योग्यतायाः प्रायिकत्वाच्च। समर्था रतिर्यथा हस्ति-जातेर्जाठराग्निः।[13] ता रतयो यथा शशकजातेर्जाठराग्निः। निवारणादि-

1 C omits it. D आसां.
2 कन्यात्वेन मौग्ध्यान्नववयःकामत्वात्।
3 C रसे.
4 BP, X. 47. 60. See *ante*, II. 36.
5 मुनिकन्यादीनाम्।
6 C drops न स obviously due to mistake.
7 CD ०त्रेव०.
8 UN, p. 415.
9 लक्ष्मीः [इत्यत्र]।
10 C adds च after it. D annotates: महिषी[इत्यत्र].
11 दुर्गाव्रतपराणां कन्यानाम्।
12 C omits ०योग्यतातोऽ०.
13 प्राणिभेदानां जाठराग्नेरिव जातिभेदात्प्रकर्ष उपलभ्यते। न हि लङ्घनादिनापि हस्तिनामिव शशकानां तदग्निर्विकाशं प्राप्नोति।

सद्भावेऽपि ताः[1] समर्था[2]साद‍ृश्यं न प्राप्नुवन्ति। यथा बहुलङ्घनै[3]रपि शशकजाठराग्निर्हस्तिजाठराग्नि[4]साद‍ृश्यं न प्राप्नोतीति। किञ्च समर्थायां समर्थाप्रायायाञ्च समञ्जसाप्रायायाञ्च प्रच्छन्नकामता। रासारम्भे साक्षान्निवारणादि[5] यदेतद्विरुद्धं जातं तत्खलु जिगीषूणां मत्तहस्तिनः परदुर्गार्गल
5 इव तासां[6] रतीनां पञ्चम[7]पुरुषार्थसारत्वेन चतुर्वर्गतिरस्कारिस्वभावाभ्यामपि गौणमुख्यसमञ्जसाभ्यां यथोपयोगं प्रबलतमतां[8] प्रबलतरतां[9] प्रबलतां[10] व्यनक्ति। किञ्च पत्नीभावाभिमानोपपत्नीभावाभिमानयोर्वैलक्षण्यं चित्तसङ्कोचविशेषोत्पादकादरगौरवविशेषमयस्वभाववि[38a]-शेषेण तदुपमर्दिचित्तस्फारताविशेषोत्पादकसम्भ्रमविशेषाभावमयस्वभाव-
10 [11]विशेषेण। चित्तस्य सङ्कोचविशेषेण स्फारताविशेषेण प्रेम्णः सङ्कोचविशेषः स्फारताविशेषश्च[12] स्यात्। विनापि पत्नीभावाभिमानं वृत्तीश्च तद्गताः समञ्जसागुणः[13] श्रीमत्समर्थायां विराजते। किञ्च यथा मधुरे[14] स्थितगुणस्यापि वत्सलस्य वैरितया सम्बन्धमात्रेण[15] मधुरो विरसो जायत एवं समञ्जसायाः समर्थायां स्थितगुणाया अपि सम्बन्ध-
15 मात्रेण[16] समर्था विरसा जायते।[17] परस्परविरुद्धस्वभावत्वात्तयोः। स च सम्बन्ध आधारस्यापृथक्तया[18] न तु पृथक्तया[19]। स चाधारः समर्थाया

---

1 गौर्यादिरूपा रतयः।
2 A adds ०प्राया०.
3 C ०यत्नै०.
4 C ०ग्नेः.
5 द्वारबन्धकुलमर्यादादि।
6 समर्थासमर्थाप्रायासमञ्जसाप्रायाणाम्।
7 A पञ्च०.
8 राधिकादिषु समर्थायाम्।
9 परकीयाकन्यासु प्रायसमर्थायाम्।
10 कात्यायनीव्रतपरासु प्रायसमञ्जसायाम्।
11 B omits ०स्वभाव०.
12 C ०विशेषः.
13 परिचर्यादरविशेषगुणः।
14 C मधुपुरे.
15 मम पुत्र इति।
16 पत्नीत्वसम्बन्ध[मात्रेण]
17 यदा समर्थाधारे समञ्जसासम्बन्धस्तदा समर्था विरसा जायते। यदा समञ्जसाधारे समर्थासम्बन्धस्तदा समञ्जसा विरसा न जायते किन्तु गुणाधिका भवति।
18 अत्र कात्यायनीव्रतपरकन्यानां समर्थरतिमत्त्वेन पत्नीभावोपपत्नीभावाभिमानतया समर्थाया यद्वैरूप्यं तस्य खण्डनम्।
19 समर्थाधारस्य पृथक्तया समञ्जसासम्बन्धः वैरस्याय न कल्पत इत्यर्थः।

न तु समञ्जसायाः। समर्थायाः सम्बन्धेन सम्बन्धानुरूपापकर्षहान्या तदनुरूपोत्कर्षापातात्समञ्जसायां[1] गुणविशेषः स्यात्। अत एवात्र दृष्टान्त एकांशेन। स च गुणविशेषः[2] प्राय[3]समञ्जसायां रतौ दर्शितोऽस्ति। [38b] किन्तु समर्थाप्रायायां रतौ यदीष[4]त्सामञ्जस्यं कथितं तत्तु पति-
5 त्यागरूपस्यासामञ्जस्य[5]स्याभाव एव न तु साक्षात्तत्[6]। अतोऽस्यां न वैरस्यम्। विप्रलम्भेषु प्रौढपूर्वरागप्रादुर्भावप्रकारः पूर्वं तृतीयप्रकाशने सङ्क्षेपेण दर्शितोऽपि विशेषेण दर्श्यते[7]। समर्था रतिः स्वरूपवैशिष्ट्येन हेतुनादौ परोढत्वादिनिमित्तान्प्रकाश्य पश्चात्तैरेव सामर्थ्यद्योतकैर्निमित्तै-रात्मानं प्रकाशयति। अतो रतेरस्याः[8] स्वयम्प्रकाशत्वमायातम्।
10 सामर्थ्यद्योतनात्पूर्वं वैशिष्ट्यं सदपि तत्त[9]द्वृत्तिभेदप्राकट्यं विनाप्रयोजकतया नापेक्षितम्[10]। यथा महाप्रलये मायायां लीनायां सत्त्वादीनां[11] तत्तद्वैशिष्ट्यं बीजरूपेण सदपि तत्तद्वृत्तिभेदप्राकट्यं विनाप्रयोजकतया नापेक्षितम्।

लीलाशक्तिमनुग्राह्य यो ग मा या श्च सा यदा।
15 समर्था गूढवैशिष्ट्यानादिवैशिष्ट्यभाक्सदा ॥५०॥
वर्त[39a]ते तर्हि लीलाख्यशक्त्या जन्मादि[12] तन्यते।
यो ग मा या तु वैशिष्ट्यनिमित्तानि[13] प्रकाशयेत् ॥५१॥
स्वरूपेण कदाचित्तु न स्वाधारं जहाति सा[14]।
वैशिष्ट्यदर्शनात्पूर्वं सामान्येति प्रकीर्त्यते ॥५२॥

---

1 प्रायसमञ्जसायाम्।
2 विरोधतिरस्कारादिः।
3 ABC omit प्राय°.
4 C omits °दीष°.
5 C omits °स्य°.
6 न तु समञ्जसागतसामञ्जस्यम्।
7 C दृश्यते.
8 C only अस्याः. D explains: समर्थायाः.
9 लोकधर्मातिक्रमः।
10 न चिह्नितम्।
11 सत्त्वगुणादीनाम्।
12 लीलाशक्तिर्जन्मादिलीलां बाल्यञ्च प्रकटय्य बाल्ये रतेः सामान्यरूपं बाल्यान्ते वैशिष्ट्यञ्च प्रकटय्य पूर्वरागं प्रकटयति।
13 परकीयोपपत्यादीनि।
14 समर्था।

अवेक्ष्य बाल्ये लीलाख्या शक्तिर्नातिरसावहम् ।
समर्थारतिवैशिष्ट्यं न प्रादुर्भावयेत्किल ॥५३॥
बिभेति वयसो बाल्यान्महाप्रलयसन्निभात् ।
समर्थारतिवैशिष्ट्यं शक्तिवैशिष्ट्यसन्निभम् ।
5 लीनवृत्तितया यत्र[1] न प्रयोजनमुद्वहेत् ॥५४॥

किञ्च । बीजवैशिष्ट्यं यथा वृक्षादीनां वैशिष्ट्यहेतुभूतं स्याद्वृक्षादीनां वैशिष्ट्यं यथा बीजानां वैशिष्ट्यहेतुभूतं स्यादेवं निसर्गस्वरूपयोस्तथा स्वल्पस्वरूपयुतनिसर्गस्वल्पनिसर्गयुतस्वरूपयोश्च वैशिष्ट्यं क्रमेण समञ्जसासमर्थयोस्तथा समञ्जसाप्रायासमर्थाप्राययोश्च वैशिष्ट्यहेतुभूतं स्यात् । 10 समञ्जसासमर्थयोस्तथा स[39b]मञ्जसाप्रायासमर्थाप्राययोश्च वैशिष्ट्यं निसर्गस्वरूपयोस्तथा स्वल्पस्वरूपयुतनिसर्गस्वल्पनिसर्गयुतस्वरूपयोश्च वैशिष्ट्यहेतुभूतं स्यात् ।[2] यदा बीजानि मृदि लीनतयाज्ञातानि वर्तन्ते तदा तेषां वैशिष्ट्यं सदप्यप्रयोजकतया नापेक्षितम् । एवं निसर्गस्वरूपादीनि रतिभेदकारणानि रतिसामान्यावस्थायां लीनतयाज्ञातानि यदा वर्तन्ते 15 तदा तेषां वैशिष्ट्यं सदप्यप्रयोजकतया नापेक्षितम् । किञ्च परोढाश्रयाया मुख्यपरमेयत्त्वारूढरागोपादानरूपायाः समर्थाया व्र जे न्द्र न न्द नत्वेन सुष्ठुनिष्ठायाः परमोत्कर्षेण[3] दुर्बोधता । यथा [4]**ल लि त मा ध वे**

गोपीनां पशुपेन्द्रनन्दनजुषो भावस्य कस्तां कृती
विज्ञातुं क्षमते दुरूहपदवीसञ्चारिणः प्रक्रियाम् ।
20 आविष्कुर्वति वैष्णवीमपि तनुं तस्मिन्भुजैर्जिष्णुभि-
र्यासां हन्त चतुर्भिरद्भुत[40a]रुचिं रागोदयः कुञ्चति ॥५५॥[5]

**गोपीनां कन्यानां मुग्ध[6]त्वेन नवकामत्वादिना रासा[7]नुपयोगित्वातिशयभावा[8]द्गोपैर्व्यूढानामिति ।**

1 बाल्ये ।
2 C omits समञ्जसासमर्थयो °स्यात्.
3 C °र्षत्वेन.
4 C inserts श्री°.
5 LM, VI. 14.
6 ABC मुग्धा°.
7 BD रसेऽ°.
8 AC omit °तिशयभावा°.

वैलक्षण्यमिदं[1] व्यक्तं प्रकाशनचतुष्टये ।
वैशिष्ट्यस्पष्टतापत्त्यै तथापि पुनरीरितम् ॥५६॥
मतप्रदर्शनेनैव विमतस्य निराकृतिः ।
तथापि मतदार्ढ्याय क्वापि विमतखण्डनम् ॥५७॥

5 अत्र का त्या य नी व्रतपरकन्यानां समर्था[2]रतिमत्त्वेन पत्नीभावाभिमानात्मतयोपपत्नीभावाभिमानात्मतया समर्थाया यद्द्वैरूप्यं तस्य विमतस्य खण्डनम् । तेन स्थानलीलाद्वैरूप्यरूपस्पष्टविमतखण्डनं सिद्धमिति ।

द्वैविध्यं कन्यकानां यत्पुराणेन स्फुटं क्वचित् ।
समर्थाचकरोच्छित्त्यै तत्स्फुटीकृतमीश्वरैः ॥५८॥[3]

10 इति वैलक्षण्यचतुष्टये परकीयाततिका त्या य नी व्रतपरकन्याततिरत्योर्वैलक्षण्यं द्वितीयं पूर्णम् ॥

वन्दे श्री कृ ष्ण चै त न्यं कारणातीतविग्रहम् ।
यल्लीला कारणातीता धामभृत्यादिभिः सह ॥५९॥
यद्धामलीला[4]द्वैविध्यं भेदेऽपि देशकालयोः ।
15 अपेक्ष्य व्र ज तल्लीले[5] नतं गौ र वि धुं भजे ॥६०॥

## अथ श्री कृ [40b] ष्ण लीलामत्स्यादिलीलयोर्वैलक्षण्यम् ।

महाप्रलये महदादिकार्यब्रह्माण्डे तद्गते देवेन्द्रियाधिष्ठानादिभेदचये देवमनुष्यतिर्यगादिभेदचये च ब्राह्मणक्षत्रियवैश्यशूद्रादिभेदचये च स्वस्वोपादाने

1 परकीयाततिर्व्रतपरकन्यकाततिस्तयोर्वैलक्षण्यम् ।
2 AC समर्थ॰.
3 C omits this verse.
4 C after this inserts ॰परिकरधामकालभेदाभावात्तस्य प्रभोः प्रकाशत्वं लीला॰. This leads to metrical defect as also unpropriety of sense. This is evidently a scribal error.
5 कृष्णलीलागौरलीले । अथवा व्रजश्च व्रजलीला च ते ।

प्रविष्टे सति महत्तत्त्वे स्वोपादाने प्रकृतौ प्रविष्टे सति प्रकृतौ स्वाश्रये शक्तिमति श्रीभगवति प्रविष्टायां सत्यां ये तत्तद्भेदास्ति[1]ष्ठन्ति ते पूर्वं तत्तदभेदेनाज्ञजनैः प्रतीता[2] अपि चिच्छक्तिविलासा अत एव नित्याः[3]। व्यष्टिजीवे[4] समष्टि[5]जीवे स्थूलावस्थवैराजं[6] प्रविष्टे सति तस्मिन्स्वसूक्ष्मावस्थे हिरण्यगर्भे प्रविष्टे
5 सति तस्मिन्स्वाश्रये शक्तिमति श्रीभगवति[7] प्रविष्टे सति ये जना[8]स्तिष्ठन्ति ते पूर्वं तदभेदेनाज्ञैः प्रतीता अपि चिच्छक्तिविलासरूपाः श्रीभगवत्परिकराः। किञ्च। सपरिकरस्य श्रीकृष्णस्य नराकृतित्वं श्रीमाथुरस्य भूरूपत्वं मनुष्यान्तर्वर्तित्वं भूलोकान्तर्वर्तित्वं[9] [च] विना न सिध्यति। त[10]त्त[11]दतीतत्वं विना तस्य[12] तस्य[13] प्रपञ्चातीतत्वञ्च न सिध्यति।
10 पूर्वं विना माधुर्यस्या[4 | a][14]सिद्धिरन्तिमं विनैश्वर्यस्यासिद्धि-[15] र्नरभूलोकसादृश्याभावात्, तत्तदतीतसालक्षण्याभावाद्, अनेन प्राकृताप्राकृतसालक्षण्याभावेन तस्य तस्य परमविलक्षणत्वं सिध्यति। एकतरस्याभावे परमवैलक्षण्यहानिः स्यात्। अतः प्रलये महाप्रलये च तत्त[16]न्नाशेऽपि तत्तदन्तर्वर्त्तित्वं[17], योगमायाकलित[18]तादृश-
15 तत्तदभिमननात्। चिच्छक्तिविलासास्तु न महाप्रलयादिहेतुकालाधीनाः। कालो हि भगवद्भ्रूविक्षेपरूपलीलाविशेषत्वेनोपचरित[19]स्तच्छक्ति-[20] विशेषः[21] प्रकृतिविषयो, न तु चिच्छक्तिविषयः। अत एव केवलप्रकृतिक्षोभनस्वभावः। प्रकृतौ लीनायां कालस्याप्रयोजकत्वाद्भगवति लीनस्तिष्ठति।

---

1 C adds ०द्भेदाश्च ति०.
2 महदादिदेवेन्द्रियादिभेदाः।
3 भगवदवताराः।
4 अस्मदादिनानारूपजीवे।
5 ब्रह्मादि।
6 विराट्पुरुषम्।
7 श्रीकृष्णे परव्योमनाथे. कारणार्णवशायिनि।
8 व्यष्टिजीवादयः।
9 C omits this.
10 नराकारत्वस्य।
11 भूरूपत्वस्य।
12 श्रीकृष्णस्य।
13 माथुरस्य।
14 C inserts ०प्र०.
15 C omits ०रन्तिमं० सिद्धि०.
16 प्रपञ्चनरस्य प्रपञ्चभुवः।
17 कृष्णस्य मनुष्यान्तर्वर्तित्वं माथुरस्य भूलोकान्तर्वर्तित्वम्।
18 C ०कल्पित०.
19 ABD ०चित०.
20 C inserts here विलयाः.
21 C विशेष०.

तदा यः कालः[1] स पूर्वं तदभेदेनाज्ञैः प्रतीतोऽपि चिच्छक्तिविलास-विशेषः ।

लीलावसररूपस्य कालस्यावकरो वरः ।
प्राकृतस्थिति[2]सृष्टयादिविषयः काल ईर्यते ॥६१॥

5 जन्मनिमित्ते कर्मणि लीने यज्जन्म स्ववृत्तिभिस्तिष्ठति तत्खलु पूर्वमज्ञैस्त-ज्जन्मा[3]भेदेन प्रतीतमपि चिच्छक्तिविलासरूपम् । एवं स्वभावसंस्कारयो-र्लीन[41b]योः सतोर्यौ वर्तेते तौ खल्वज्ञैः पूर्वं तदभेदेन प्रतीतावपि शुद्ध-सत्त्वविशेषरूपौ । मायावृत्तौ लीनायां या चेष्टा वर्तते सा पूर्वमज्ञैस्तत्कार्य-चेष्टाभेदेन प्रतीतापि चिच्छक्तिविलासरूपा लीला । काले लीनेऽपि यो ग मा-
10 या या वैभवप्रकाशान्न यो ग मा या कालाधीना । तस्याः[4] श्रीभगवत्परिकर-विषयत्वाद्भगवद्धामस्थितत्वम् । भगवद्धाम्नि कालविक्रमादि नास्ति । यथा

प्रवर्तते यत्र रजस्तमस्तयोः
सत्त्वञ्च मिश्रं न च कालविक्रमः
15 न यत्र माया किमुतापरे ह रेः [5]

इत्यादि । कालविक्रम एव नाशहेतुः । यो ग मा या यां कालविक्रमाभावान्न यो ग मा या वैभवं नश्वरम् । चिच्छक्तिविलासविशेषरूपस्तु कालो लीला-धीनः । लीलाभिर्निज आविर्भावतिरोभावयोः सो[6]ऽनुगृह्यमाणो भवेत् । एवं तामसराजससात्त्विकेषु भावेषु लीनेषु ये भावास्तिष्ठन्ति ते पूर्वमज्ञैस्त-
20 त्तदभेदेन प्रतीता अपि चिच्छक्तिविलासाः । तुरीयस्वरूपं महापुरुषादेरव-तारगणस्योपा[42a]दानम् । तुरीयस्य लक्षणं

---

1 लीलावसरकालः ।
2 BD ०स्थित०.
3 निमित्तादिजन्मादीनाम् ।
4 योगमायायाः ।
5 BP, II. 9. 10 a-c.
6 कालः ।

विराड् हिरण्यगर्भश्च कारणञ्चेत्युपाधयः ।
ईशस्य यन्निभिर्हीनं तत्तुरीयं[1] प्रचक्ष[2]ते ॥६२॥[3]

महापुरुषाद्यवतारगणस्य द्वौ प्रकाशौ । अप्रकटः प्रकटश्चेति । अत्र प्रकटः प्रकाशः कारणरूपः । अत एव तुरीयेच्छाप्रेरितः सोऽवान्तरभू[4]रिप्रकाशयुक्त-
5 विश्वतदंशरूपनिमित्तनाशेऽपि तत्तन्निमित्तायमानस्ववैभववलितां विश्व-तदंशनिमित्तां लीलां प्रकटयति । अतत्प्रा[5]ज्ञैरेषा कादाचित्कतया प्रतीयमाना भवेत् । न त्वेषा[6] कादाचित्की ।[7] अन्यथा

वेदानु[8]द्धरते[9]

इत्यादिपद्ये वर्तमानप्रयोगानामनुपपत्तेः । एषापि भक्त[10]प्रेमोत्पादकास्वादना ।
10 प्रकृतिजीवयोर्महापुरुषे प्रविष्टयोः सतोरवतारगणेन सह स्वस्वधामाप्रकट-प्रकाशगते स्वे स्वेऽप्रकटप्रकाशे महापुरुषोऽप्रयोजकतया प्रविशति च । यथा विष्णुधर्मो [42b] त्तरे

अनन्तानि तवोक्तानि यान्येतानि मया पुरा ।
सर्वाणि तानि संहृत्य समकालं जगत्पतिः ।
15 प्रकृतौ तिष्ठति तदा[11] सा रात्रिस्तस्य कीर्तिता ॥६३॥[12]

---

1 A तुरीयं तत.
2 ACD ०क्ष्य०.
3 Cited in SD on BP, XI. 15. 16 with तुरीयं तत्पदं विदुः in *d*.
4 ABD ०वान्तर्भू०.
5 C ०तत्प्र०.
6 A तदेषा
7 नित्या। अवतारगतलीलापि तुरीयरूपा ।
8 अथ वर्तमानशतृप्रत्ययेऽवताराणां तत्तल्लीलानामपि नित्यत्वप्रतिपादनेन श्रीकृष्णस्य नित्यतत्तदवतारिलीलात्वं वक्तुमुक्तगीतार्थमेव श्लोकेन निबध्नन्नाह वेदानिति ।
9 GG, I. 16a. The full verse is :
वेदानुद्धरते जगन्ति वहते
भूगोलमुद्बिभ्रते ।
दैत्यं दारयते बलिं छलयते
क्षत्रक्षयं कुर्वते ।
पौलस्त्यं जयते हलं कलयते
कारुण्यमातन्वते
म्लेच्छान्मूर्च्छयते दशाकृतिकृते
कृष्णाय तस्मै नमः ॥
10 C omits it.
11 C यदा.
12 Cited in LBA, p. 135, from *Viṣṇudharmottara* with यान्यण्डानि for यान्येतानि.

इति। जगत्पतिः कारणरूपो महापुरुषः। प्रकृतौ स्वस्याप्रकटप्रकाशे महापुरुषाद्यवतारेषु स्वस्वाप्रकटप्रकाशेषु प्रविष्टेषु योऽवतारस्तिष्ठति स कचित्तच्छब्दवाच्योऽप्यवतारो तुरीयरूपश्च। सुधर्मातो[1] महिषीणां मन्दिरेषु प्रवेशे यथा प्रकाशानां पृथक्त्वं तथा कारणलीलाया आविर्भावे प्रकाशयोः[2] पृथक्त्वम्।
5 अवतारगणस्य प्रवेशे[3] सुधर्माप्रवेशे[4] यथा सर्वेषां श्रीकृष्णप्रकाशानामेकत्वं तथा प्रकटाप्रकटयोः प्रकाशिप्रकाशयोरेकत्वम्।

पूर्वोक्ता विश्वकार्यार्थमपूर्वा इव चेत्स्वयम्।
द्वारान्तरेण वाविःस्युरवतारास्तदा स्मृताः ॥६४॥[5]

इत्यनेन स्वयंरूपस्य विश्वकार्यार्थमाविर्भावेनावतारत्वं यत्तत्तु स्वयंरूपे [43a]
10 क्षीरशायिनः प्रवेशात्। अत एव

प्रायः स्वांशास्तथावेशा अवतारा भवन्त्यमी[6]

इत्यत्र प्राय इति स्वयंरूपे क्षीरशायिनः प्रवेशात्। श्री[7]कृष्णस्य विश्वनिमित्तायां लीलायां सत्यां तत्र[8] क्षीरशायिप्रवेशस्याप्रयोजकत्वं स्यात्। अत एव स्व[9]स्वभक्तनिमित्ताप्रकटलीलातः[10] कारणलीला विश्वतदंशनिमित्ता
15 भिन्ना। अत एव विश्वतदंशनाशे सति निमित्ताभावात्तस्या[11]स्तिरोभावः। तुरीयस्य कचिदवतारत्वेऽपि भक्तनिमित्तप्राकट्या कारणातीतैव लीला। यथा[12]

अनुग्रहाय भक्तानां मानुषं देहमाश्रितः।
भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेद् ॥६५॥[13]

---

1 सभातः।
2 प्रकटाप्रकटयोः।
3 महाप्रलयेषु स्वे स्वेऽप्रकटप्रकाशे।
4 पुनः सभाप्रवेशे।
5 LBA, p. 13.
6 LBA, p. 13. The next is: अत्र यः स्यात्स्वयंरूपः सोऽग्रे व्यक्तीभविष्यति.
7 C omits it.
8 C अत्र.
9 C omits it.
10 नित्यलीलातः।
11 कारणलीलायाः।
12 B omits it.
13 BP, X. 33. 36 with भूतानां in *a* and देहमास्थितः in *b*.

इति। विश्वनिमित्ता कारणलीला त्वस्या[1] आनुषङ्गिकी। तस्या[2] अंशादि-द्वारा सम्पाद्यत्वान्न सा[3] कारणातीतलीलातो भिन्ना। यथा पाकार्थं[4] प्र[5]ज्वलितोऽग्निर्निजतेजोवैभवेन पाकं साधय[43b]ति। तेनैवानुषङ्गिकं शीतनि[6]वारणादिकमपि करोति। तस्य पाकसाधनतेजोवैभवा-
5 च्छीतवारणादिसाधकं तेजोवैभवं न भिन्नम्। अत एव विश्वनाशेऽपि महापुरुषादिलीलेवैषा[7] लीला न तिरोहिता भवति। अस्या लीलाया निमित्तानि नित्यानि। कारणलीलायाः कानिचिन्निमित्तानि तेषु केषुचित्प्रविश्यैकतां प्राप्तानि। तुरीये तदा क्षीराब्धिशायिनः प्रवेशात्कारणस्यापि निर्गमप्रवेशस्थानत्वात्तुरीयं रूपमेवाश्रयः। तस्य लक्षणं यथा

10 आभासश्च निरोधश्च यतश्चाध्यवसीयते।
स आश्रयः परं[8] ब्रह्म परमात्मेति शब्द्यते ॥६६॥[9]

अत एव कारणस्यैवावतारत्वं कारणातीतस्य[10] तु त[11]त्तत्र प्रवेशात्तदभेदापेक्षया। अत एवावतारतारतम्यं कारणत्वगतम्। किन्तु कारणलीलापि कारणलीलात्वेन प्रतीयमानायाः कारणातीतलीलायाः सम्पर्कजात-
10 प्रभावविशेषेण[12] मोक्षकारणं। पूर्वं का ल ने म्या दे रेवामो[13]क्षा[44a]त्। अत एव

हतारिगतिदायकः[14]

इति श्री कृ ष्ण स्य गुणविशेषः। कारणातीतलीला नित्यपरिकरनित्यप्रेम-

---

1 कारणातीतलीलाया भक्तानुग्रहलीलायाः।
2 विश्वनिमित्तलीलायाः।
3 विश्वनिमित्तलीला।
4 C पाकार्थ०.
5 A omits it.
6 ABD omit ०नि०.
7 कारणातीतभक्तनिमित्ता।
8 ABD पर०.
9 BP, II. 10. 7 with यतोऽस्त्यध्य० in *b* for यतश्चाध्य०.
10 तुरीयस्य।
11 अवतारत्वम्।
12 ऐश्वर्यसम्बन्धविशेषेण।
13 C ०देरमो०.
14 BRS(K), p. 18. The full verse:
अवतारावलीबीजं हतारिगतिदायकः।
आत्मारामगणाकर्षीत्यमी कृष्णे किलाद्भुताः ॥

निमित्ता। किन्तु कंसवधाद्या लीला यथा कारणलीलात्वेन प्रतीयमाना भवन्ति तथा रासदानादि[1]लीला[2] नेति वैशिष्ट्यमस्त्येव। कारणातीतायाः कंसवधादिलीलायाः प्रयोजनं लीलापरिकरप्रेमवर्धनम्। अत एव रासादि-लीलानां निमित्तेषु न कारणलीलानां निमित्तानि प्रविष्टानि। निमित्तानि
5 द्विविधानि। प्रतिकूलत्वेन प्रतीयमानान्यनुकूलानि चेति। तत्र प्रति-कूलत्वेन प्रतीयमानान्यघाद्यादिरूपाणि निमित्तानि। अत्र[3] प्रविष्टान्यन्यानि तु तत्तदाख्यया ख्यातानि तत्प्रतिकूलानि निमित्तानि। अत एव कंसा-द्याः साक्षात्परम्परया च बह्वीनां लीलानां निमित्तरूपा भवन्ति। यथा दानकेलौ[4] कंसो निमित्तरूपो जातः। अन्यथा मथुरां विना गोविन्द-
10 कुण्डे यज्ञासम्भवात्। तदादि[5]हेतुकानिष्टशङ्काया अभावेन यज्ञा-प्र[44b]वृत्तौ सत्यां दानलीलाया अनुपपत्तेश्च। यथाऽघो ब्रह्ममोहनादि-लीलायां निमित्तरूपो जातः। तेषां[6] कादाचित्कत्वे तासां[7] कादाचित्कत्वेन प्रतीयमानत्वं स्यात्। किञ्च महाप्रलये सर्वेषु रसेषु[8] लीनेषु ये[9] रसाः शान्ताद्या द्वादशास्तिष्ठन्ति ते चिच्छक्तिविलासाः। अत एव तन्नि-
15 मित्तानि चिद्विलासरूपाणि। श्रीकृष्णनारायणयोस्तुरीयतयैकत्वेऽपि [10]श्रीकृष्णो द्वादशानां रसानामालम्बनः श्रीनारायणस्तु शान्तप्रीत-मधुराद्भुतानां रसानामा[11]लम्बनः। तत्रापि[12] नरलीलात्वाभावादद्भुते चमत्कारो नास्ति। गौणसमञ्जसा[13]रति[14]स्थायित्वान्मधुरेऽपि परमोत्कर्षो नास्ति। अत एव श्रीकृष्णस्य मूलतुरीयत्वम्। यथा

---

1 C रासादि.
2 C omits लीला.
3 AB तत्र.
4 *Cf.* DKK, 16-20.
5 कंसादि।
6 कंसादीनाम्।
7 दानादिलीलानाम्।
8 कारणलीलागतेषु।
9 A omits it.
10 ननु श्रीकृष्णनारायणयोस्तुरीयत्वसाम्यं यदि स्यात्तदा श्रीनारायणस्य द्वादश-रसाधारत्वे रसिकमण्डलशेखरत्वमायात-मिति चेत्तत्राह।
11 BCD ०मधुराद्भुतानामा०.
12 नारायणे।
13 AB ०स०.
14 C रतेः.

मल्लानामशनिर्नृणां[1] नरवरः स्त्रीणां स्मरो मूर्तिमान्
गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः ।
मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां
वृष्णीनां परदेवतेति विदितो रङ्गं [45a] गतः साग्रजः ॥६७॥[2]

5 इति द्वादशानां रसानां निमित्तानि परस्परविरुद्धानि युगपच्छ्रीकृष्णे[3] तिष्ठन्ति। श्रीकृष्णस्य परमाचिन्त्यमहाशक्तित्वं प्रकाशयित्वा तेनापि श्रीनारायणादपि महत्त्वं प्रकाशयित्वा स्वयम्भगवत्त्वं स्थापयन्ति। तथा हि

क्वाप्यचिन्त्यमहाशक्तौ महापुरुषशेखरे ।
10 रसावलिसमावेशः स्वादायैवोपजायते ॥६८॥[4]

इति द्वादशरसाधारजनानां मनोवृत्तयः श्रीकृष्णगतद्वादशरसनिमित्त-प्रकाशनहेतवो भवन्ति। द्वादशरसाधारजनानां कादाचित्कत्वेन[5] तन्मनोवृत्तीनां कादाचित्कत्वम्। तस्मिन्सति श्रीकृष्णगतानां द्वादशरसनिमित्तानामुदयस्य कादाचित्कत्वेन[6] तन्मनोवृत्तीनां कादाचित्क-
15 त्वम्। अत एव

शक्तेर्व्यक्तिस्तथाव्यक्ति[7]स्तारतम्यस्य कारणम्[8]

इति न्यायात्तद्धेतुक[9]महत्त्वाभावस्य प्रायिकत्वम्[10]। तस्माद्द्वादशरस-निमित्तोदयो नित्यः। द्वादशरसाधारजनास्तन्मनोवृत्तयश्च नित्याः। अत एव साधूक्तं [45b]

---

1 मल्लादिभिरभिव्यक्ता रसाः क्रमेण श्लोकेन निबध्यन्ते।
रौद्रोऽद्भुतश्च शृङ्गारो
हास्यं वीरो दया तथा ।
भयानकश्च बीभत्सः
शान्तः सप्रेमभक्तिकः ॥
(Cited in SD on BP, X. 43. 17.)

2 BP, X. 43. 17. B omits नरवरः स्त्रीणां॰ साग्रजः.

3 C only श्रीकृष्णे.

4 BRS(K), p. 86.

5 C omits ॰न.

6 C omits ॰न.

7 नारायणेऽप्रकाशः ।

8 LBA, p. 83.

9 द्वादशरसोदयहेतुकः ।

10 अन्यत्र नारायणे ।

रसेनोत्कृष्यते कृष्ण रूपम्[1]

इति। अत एव

एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्[2]

इति मत्स्यादीनां पुरुषांशावतारत्वात्तल्लीलाया[3] द्वैविध्यम्[4]। श्रीकृष्णस्य
5 स्वयम्भगवत्त्वान्मूलतुरीयत्वेन तल्लीलाया न द्वैविध्यमिति। रति[5]द्वैरूप्या-
भावेऽपि लीलायाः कारणातीतलीलान्तर्भूतकारणलीलाविशिष्टतल्लीला केवल-
कारणातीतलीले[6]ति द्वैविध्यं गूढविमतस्य मूलम्। अतः श्रीकृष्ण-
लीलाया मत्स्यादिलीलातो वैलक्षण्यप्रदर्शनेन द्वैविध्यखण्डनाद्गूढविमतखण्डन-
मेवेदम्। अत्र प्रथमलीलावकरनिरसनम्। अत एव प्रथमसाधनावकरनि-
10 रसनमपि जातम्। एवं यत्र यत्र यत्संख्याकलीलावकरनिरसनं तत्र तत्र
तत्संख्याकसाधनावकरनिरसनं ज्ञेयम्।[7]

तुरीयस्य[8] कारणस्य[9] वैलक्षण्यविवेचनात्।
भ्रमोऽपयाति हृदयादन्यथा भ्रमभाग्भवेत् ॥६९॥

इति श्रीकृष्णलीलामत्स्यादिलीलयोर्वैलक्षण्यं तृतीयं पूर्णम् ॥

15 [46b] वन्दे श्रीकृष्णप्रेमाणं यस्योद्गमनमात्रतः।
ताटस्थ्यं निधनं याति तमः सूर्योदये यथा ॥७०॥

## अथ साधकरूपतटस्थरूपयोर्वैलक्षण्यम्।

अप्राप्तश्रीकृष्णादि[10]सङ्गादेस्तदर्थमतिसतृष्णस्यात एव प्रयत्नं कुर्वतो

1 BRS(K), p. 4. The full text is: रसेनोत्कृष्यते कृष्णरूपमेषा रसस्थितिः.
2 BP, I. 3. 28.
3 B omits ०या combining with द्वैविध्यम्.
4 अवतारिगतमवतारगतम्। प्रकटप्रकाशगतमप्रकटप्रकाशगतञ्च द्वैविध्यम्।
5 समर्था।
6 रासदानादिलीला।
7 C omits अत्र प्रथमलीला० ज्ञेयम्.
8 कृष्णस्य।
9 महापुरुषस्य।
10 आदिशब्दात्परिकरः।

नवानुरागिणो व्रजजनस्यानुकारि यद्रूपं तत्साधकरूपं । सिद्धरूपस्य प्राप्तश्रीकृष्णादिसङ्गादि व्रजजनानुकारित्वात्। श्रीकृष्णाद्यैश्वर्यानुसन्धानवलितात्मयथास्थितपुंस्त्वादिभावनायुतदेहरूपं तटस्थरूपं । व्रजजनाननुकारित्वात्। यथा श्रीकृष्णकर्णामृते लीलाशुकस्यापि[1] सिद्धरूपेण[2] श्रीललितादिवद्व्यवहारः । साधकायमानरूपेण पूर्वरागिण्याः श्रीराधासख्यो[3]त्कण्ठितायाः श्रीकन्दर्पसुन्दर्या इव व्यवहारः। व्रजलोकानुसारं विनात्मपुंस्त्वभावनया श्रीकृष्णाद्यैश्वर्यभावनया च[4] तटस्थायमानरूपेण किञ्चित्प्रार्थनञ्च। तस्य[5] तटस्थायमानरूपेणात्मनः पुंस्त्वभावनया किञ्चित्प्रार्थनं यथा

विचित्र[46b]वाङ्कुरशालि बाला-[6]
स्तनान्तरं यामि वनान्तरं वा ।
अपास्य वृन्दावनपादलास्य-
मुपास्यमन्यत्र विलोकयामि ॥७१॥[7]

ऐश्वर्यभावना[8] यथा

हस्तन्यस्तनतापवर्गमखिलोदारं किशोराकृति[9]

इत्यादि ।

वैलक्षण्यमिदं व्यक्तीभवितव्यं चतुष्टये ।
साधनानां तथाप्यत्र स्पष्टत्वाय पृथग्धृतम् ॥७२॥

---

1 BD ०शुकस्य.
2 B omits ०ण.
3 C ०परमो०.
4 D omits it.
5 लीलाशुकस्य ।
6 B omits next three lines of the verse.
7 KK, 22 with याम in *b* and विलोकयाम in *d*.
8 D ०नाया.
9 KK, 2 c. The whole verse is:
अस्ति स्वस्तरुणीकराग्रविगलत्कल्प-
प्रसूनाप्लुतं
वस्तु प्रस्तुतवेणुनादलहरीनिर्वाण-
निर्व्याकुलम् ।
स्रस्तस्रस्तनिरुद्धनीविविलसद्गोपी-
सहस्रावृतं
हस्तन्यस्तनतापवर्गमखिलोदारं
किशोराकृति ॥

अत्र साधनद्वैरूप्य[1]खण्डनेन तत्प्राप्यरतिद्वैरूप्यखण्डनम्। ततोऽत्रापि स्पष्टविमतखण्डनं जातम्। साधनद्वैरूप्य[2]खण्डनेन गूढादिविमतद्वयखण्डनमपि जातं। धाम्नोऽनुगम्यभावचेष्टिताधारजनपदरूपत्वात्। लीलायाः साधनभूता[3]स्पदत्वात्। अत्र साधकरूपस्य केवलं यथास्थितत्वं बाध्यम्।
5 वैध्यापातस्तु[4] साधनचतुष्टये बाध्यः। इति साधकरूपतटस्थरूपयोर्वैलक्षण्यं चतुर्थं पूर्णम्॥

वैलक्षण्यस्य विज्ञानं सालक्षण्यभ्रमापहम्।
सूच्यग्रसूक्ष्मया बुद्ध्या भाव्यमेतत्पुनः पुनः॥७३॥

अत्रावकर[47a]चतुष्टयनिरसनं जातम्। धामावकरो रत्यवकरो लीला-
10 वकरः साधनावकरश्चेत्यवकरचतुष्टयम्। उत्तमे वस्तुनि योजितमपकृष्टं वस्त्ववकरः स्यात्। तत्र[5] तद्योगस्य[6] तदपकर्षकारकत्वात्। तत्र धामावकरः। श्री व्र जे कल्पितत्वेनासता सालक्षण्येन योजितो गो लो को व्र जा पकर्षकारकत्वात्त[7]दवकरः स्यात्। अथ रत्यवकरः। समर्थायां कल्पितत्वेनासता सालक्षण्येन योजितो का त्या य नी व्रतपरकन्यकारतिः समर्थापकर्षकारक-
15 त्वात्त[8]दवकरः स्यात्। अथ लीलावकरः। श्री कृ ष्ण कृतासुरवधलीलासु कल्पितत्वेनासता सालक्षण्येन योजिता क्षीरशायिलीला तद्[9]पकर्षकारकत्वात्तदवकरः स्यात्। अथ साधनावकरः। साधकरूपेण साधने कल्पितत्वेनासता सालक्षण्येन योजितं तटस्थरूपकृतैश्वर्यानुशीलनादि तदपकर्षकारकत्वात्त[10]द्[11]वकरः स्यादिति। किञ्च। अज्ञातस्य सतः प्रकाशनं प्रथम-
20 चतुष्टये[12] जातम्। तेन कल्पितस्याप्यसतो निरसनं जातम्। कल्पितस्यासतो [49b] निरसनं तृतीयचतुष्टये[13] भविष्यति। तेनाज्ञातस्यापि सतः प्रकाशनञ्च भविष्यति। इति वैलक्षण्यचतुष्टयं सम्पूर्णम्॥

---

1 व्रजलोकानुसारेण तटस्थरूपेण [च]।
2 CD ०द्वैविध्य०.
3 C ०हपा०.
4 रागानुगायाः।
5 उत्तमे।
6 अपकृष्टयोगस्य।
7 व्रजस्य।
8 समर्थायाः J.
9 कृष्णलीलायाः।
10 C omits ०त्त०.
11 साधनस्य।
12 प्रकाशनचतुष्टये।
13 निरसनचतुष्टये।

श्री कृ ष्ण चरणस्फूर्तिर्जायते हृदि चेन्मनाक् ।
दुर्ज्ञेयमपि तत्त्वं स्यात्सुबोध्यं नात्र संशयः ॥१॥

अथ निरसनचतुष्टयम् ।

व्याहताभ्यां चतुष्काभ्या[1]मविरुद्धं मतं स्मृतम् ।
5 मतनिर्धारणायैव विमतस्य निराकृतिः ॥२॥
विमतस्य निरासेन मतमूह्यं स्वयं भवेत् ।
मतप्रदर्शनात्क्वापि विमतं स्यान्निराकृतम् ॥३॥
आद्यमत्र[2] द्वितीयन्तु[3] चतुष्टयत्रये[4] स्फुटम् ।
निरस्तं विमतद्वन्द्वं[5] चतुष्टययुगे[6]ऽभवत् ॥४॥
10 स्वरूपाणामन्यथात्वमाद्य[7]माद्ये[8] निराकृतम् ।
सालक्षण्यं द्वितीयन्तु द्वितीये[9] च तिरस्कृतम् ॥५॥
साधनद्वयतारूपं बाध्यं तुर्ये चतुष्टये[10] ।
अतः सप्तविधत्वे[11]ऽपि विमतानां चतुष्टयम् ।
चतुष्टये तृतीये[12]ऽत्र खण्डितव्यं विवेकतः ॥६॥

## 15 तत्र गो कु ला प्रकटप्रकाशाप्रकटलीलाविशेषनिरसनम् ।

गो कु ल [48a]प्रकाशद्वैविध्ये प्रकटाप्रकटलीलयोः स्वरूपेण द्वैविध्यं स्यात् । तयोः स्वरूपेण द्वैविध्ये प्रकटलीलायाः प्रतीयमानकादाचित्कत्वदोषः स्यात् ।

---

1 प्रकाशनचतुष्कवैलक्षण्यचतुष्काभ्याम् ।
2 प्रकाशनवैलक्षण्यचतुष्कद्वयोः ।
3 मतनिर्धारणार्थविमतनिराकृति[रूपम्] ।
4 निरसनचतुष्टयत्रये ।
5 गूढातिगूढम् ।
6 प्रकाशनवैलक्षण्यचतुष्टय[युगे] ।
7 निरस्तस्य विमतद्वयस्याद्यम् ।
8 प्रथमप्रकाशनचतुष्टये ।
9 वैलक्षण्यचतुष्टये ।
10 साधनचतुष्टये ।
11 गूढविमतं स्पष्टगूढातिगूढं साध्यगत-साधनगतद्वैविध्यमिति षट्कं मत्स्यादि-लीलासालक्षण्यमेकमिति सप्तमम् ।
12 निरसनचतुष्टये ।

प्रकटाप्रकटलीलयोः स्वरूपेणैक्याद् गो कु ल प्रकाश[1]द्वैविध्यस्याप्रयोजकत्वं स्यात्। अतः[2] श्री रा धि का दिभिः सार्धं प्रकटविहारेऽपि श्री कृ ष्ण-स्याधोक्षजत्वा[3]त्तत्परिवारसमयलीलानाञ्च तत्स्वरूपशक्तिविलासत्वेन तत्स-मानधर्मत्वाच्च तस्य तेषाञ्च[4] प्रपञ्चेन्द्रियाविषयत्वमप्राकट्यम्।

5　　ततः स्वयम्प्रकाशत्वशक्त्या स्वेच्छाप्रकाशया।
　　सोऽभिव्यक्तो भवेन्नेत्रे न नेत्रविषयत्वतः ॥७॥[5]

इति निर्धारात्स्वयम्प्रकाशशक्त्या तस्य तेषाञ्च प्रपञ्चेन्द्रियगोचरत्वं प्राक-ट्यम्। गो कु ल प्रकाशद्वैविध्येऽधोक्षजत्वस्वयम्प्रकाशशक्त्योः प्रयोजकत्वस्य कादाचित्कत्वमपि स्यात्। गो कु ला प्रकटप्रकाशे स्थिते श्री कृ ष्णा दौ
10 तत्र[6] प्रपञ्चरूपस्य निमित्तस्याभावेन तयो[7]र्वृत्त्यप्रकाशः[8]। अत एव[9] श्री[48b] भा ग व ता मृ ते

　　चेदद्यापि दिदृक्षेरन्नुत्कण्ठार्ता निजप्रियाः।
　　तां तां लीलां ततः कृ ष्णो दर्शयेत्तान्कृपानिधिः ॥८॥
　　कैरपि प्रेमवैवश्यभाग्भिर्भागवतोत्तमैः।
15　　अद्यापि दृश्यते कृ ष्णः क्रीडन् वृ न्दा व ना न्तरे ॥६॥[10]

इत्यत्रैव वृ न्दा व ने लीलायाः प्रपञ्चागोचरायाः साक्षाद्दर्शनम्। अप्रकट-वृ न्दा व न सत्तायां

　　ते[11] तु ब्र ह्म ह्र दं नीताः[12]

---

1 C omits द्वैविध्ये ०प्रकटलीलायाः प्रकाश०.

2 सिद्धान्तमाह।

3 अधःकृतमक्षजं ज्ञानं येन सः। तस्य भावस्ततः। प्रपञ्चेन्द्रियज्ञानागोचर-त्वाद्यथा श्रीमद्वैष्णवतोषण्यामधोक्षज इन्द्रियज्ञानातीतस्वरूपोऽभिधानटीकाया-श्चाधोक्षाणां जितेन्द्रियाणां जायते प्रत्यक्षीभवतीति भरतमल्लिकः।

4 परिवारादीनाम्।

5 LBA, pp. 151-52.

6 अप्रकटप्रकाशे।

7 अधोक्षजत्वस्वयम्प्रकाशशक्त्योः।

8 ABD ०प्रकाशात्.

9 यतः स्वयम्प्रकाशशक्त्या स्वेच्छाप्रकाशया प्रपञ्चनेत्रेऽभिव्यक्तो भवेत्।

10 LBA, p. 146.

11 नन्दाद्याः।

12 BP, X. 28. 16*.

इतिवत्तत्र तस्याः साक्षाद्दर्शनानुपपत्तिः। तां तां जातप्राकट्याम्[1]। ततोऽन्यस्याः कस्या अप्येकस्या लीलाया अभावात्। स[2] च श्रीमद्भागवतादिषु कुत्राप्यवर्णितत्वात्। अत एव श्रीमद्गोस्वामिचरणैः श्रीस्तवमालादिषु निजग्रन्थगणेषु कुत्राप्यदर्शितत्वाच्च।
5 किञ्च अप्रकट वृन्दावन[3] सत्त्वे

प्रपद्य भवदीयतां कलितनिर्मलप्रेमभि-
र्महद्भिरपि काम्यते किमपि यत्र तार्णं जनुः[4]।
कृतात्र कुजनेरपि व्रजवने स्थितिर्मे यया
कृपां कृपणगामि[49a]नीं सदसि नौमि तामेव वाम् ॥१०॥[5]

10 इत्यादेरनुपपत्तिः। तथा

वृन्दावने विहरतोरिह केलिकुञ्जे[6]

इत्यादेश्चानुपपत्तिः। केवलं लीलानां जातप्राकट्यानां नित्यतापादनार्थं तासां

प्रपञ्चगोचरत्वेन सा लीला प्रकटा मता।
15 अन्यास्त्वप्रकटा भान्ति तादृशयस्तदगोचराः ॥११॥[7]

इति प्राकट्यमप्राकट्य[8]मनन्तप्रकाशैः साधितम्। अन्या जातप्राकट्यतया भाविप्राकट्यतया च[9] गता आगामिन्यश्चेत्यर्थः। अन्यथा अन्या इति बहुवचनानुपयोगाल्लीलापरिमाणान्यथाभावश्च तत्कालपरिमाणान्यथाभावश्च। तादृश्य इति रतेस्तन्निमित्तानाञ्चाभेदात्[10]। अत एव प्रकटाप्रकटा चेति

1 मृन्मयवृन्दावनगतलीलाम्।
2 अभावः।
3 C adds ०स्य.
4 तृणसम्बन्धि जन्म।
5 StM, p. 111.
6 SA, p. 78. The full verse is:
वृन्दावने विहरतोरिह केलिकुञ्जे
मत्तद्विपप्रवरकौतुकविभ्रमेण।
सन्दर्शयस्व युवयोर्वदनारविन्द-
द्वन्द्वं विधेहि मयि देवि कृपां प्रसीद ॥
7 LBA, p. 156 with स्मृता for मता.
8 C प्राकट्य०.
9 C omits भावि० च.
10 C omits ०लीलापरिमाणान्यथा० भेदात्.

द्वैविध्यमेकप्रकारलीलागतम्। व्यतिरेकेऽप्रयोजकतामाह। अप्रकट गो कु ल-गता लीलाः प्रकट गो कु ल लीलावद्यद्यनन्तप्रकाशैः साध्यास्तर्ह्यप्रकटस्य गो कु ल स्य स्वीकारेण किं प्रयोजनम्। ननु

अन्तर्गृहगताः काश्चिद्गोप्योऽलब्धविनिर्गमाः[1]

5 इत्यत्र याः पतिभी रुद्धा[49b]स्ता गो कु ल स्याप्रकटप्रकाशं प्राप्ता इति श्रूयते। तत्राह नरलीलारसः सर्वत्र रक्षणीयः। तत्रापि[2] यो ग मा या-[3] वैभवं विना स रक्षितुमशक्यः। तस्माद् गो कु ल स्याप्रकटप्रकाशस्वीकारेण किं प्रयोजनम्। तेन यो ग मा या वैभवेन सोऽत्रैव[4] समाधेयः। अत एव श्री गो स्वा मि पादैरुक्तं

10 सिद्धिं कतिचिदेवासां रासारम्भे प्रपेदिरे।
इति केचित्प्रभाषन्ते प्रकटार्थानुसारिणः ॥१२॥[5]

प्रकटार्थानुसारिणः स्पष्टार्थानुसारिणो[7] न तु गूढार्थानुसारिणः।[6] गूढार्थे तु देहत्यागोऽप्रकट गो कु ल प्राप्तिश्च नास्ति। अत एव आ न न्द वृ न्दा व ने

अथ पतिभिर्निरुध्यमाना मानापगमे या गुणदेहं विहाय कृ ष्णा ङ्गसङ्गसमुचितं
15 देहमासादितास्ता एव साभिमानमाक्रोशन्त्य ऊचुः

पतिपुत्रसुहृत्सहोदरांस्तृणकल्पानतिमुच्य तेऽन्तिकम्।
कितवोपगताः पुनः कथं विपिने नो निशि कष्टमत्यजः ॥१३॥

पुनः सकला एव सकला[7] एवमूचुः ' हसितं [50a] मृदु चारु वीक्षितम्[8]

इत्यादि। तथेदं प्रकरणमपि नवायौथिकीगततया न्यायप्राप्तं स्यात्।
20 अन्यथा स्वल्पमुनिचरीतरासां साधकचरीणां सर्वासां श्रीरासलीलानर्हता-

---

1 BP, X. 29. 9a-b. B omits गोप्योऽ॰ र्गमाः.

2 अप्रकटगोकुलेऽपि वृन्दावने।

3 AD add ॰या.

4 प्रकटगोकुलेऽपि वृन्दावने।

5 UN, p. 65.

6 व्रजे यदेव स्पष्टं तदेव गूढं स्पष्टास्पष्टत्वेन द्वैविध्यं नास्त्येव।

7 कलाकौशलयुक्ता गोप्यः।

8 AVC, XIX. 35-37 with देहं after गुणदेहं and कितवोव॰ for कितवोप॰.

पत्तेः। अत एव नवायौथिकीतरसाधकचरीणामेतत्पूर्वमेव श्रीरासलीला-
प्राप्तिर्न्याय्या। नश्वरत्वानश्वरत्वाभ्यां नश्वरकार्यत्वानश्वरकार्यत्वाभ्यां
प्रतिबिम्बत्वेन बिम्बत्वेन जडत्वचैतन्याभ्यां नश्वरयोगायोगाभ्यामपकृष्टो[1]-
त्कृष्टत्वाभ्यां द्वैरूप्यम्। स्वल्पत्वबहुत्वाभ्यां द्वैविध्यम्। अत्र प्रथमं[2]
5 मायास्वरूपशक्तिकार्यगतम्। द्वितीयं[3] मायास्वरूपशक्तिगतम्। तृतीयं[4]
तत्तत्स्वरूपगतम्। तुर्यं[5] सोपाधिनिरुपाधिजीवगतम्। पञ्चमं[6] शुद्धात्म-
परमात्मगतम्। षष्ठं[7] स्वंशांशिभगवत्स्वरूपगतम्। षण्णां द्वैरूप्यद्वैविध्य-
कारणानां मध्ये वृन्दावनादीनां[8] द्वैरूप्ये द्वैविध्ये च [50b] किमपि
न घटते। अतस्तेषां द्वैरूप्यादि नास्ति। धामलीलापरिकरसमयप्रभवा-[9]
10 दीनामेकस्य नश्वरत्वादिके सर्वेषां तत्स्यादिति। प्रकाशस्तु परिकरधामसमय-
लीलानां भेदेन वस्तुभेदः स्यात्। तत्र[10] परिकरभेदे यथा

तासां मध्ये द्वयोर्द्वयोः[11]

इति। धामभेदे यथा

हरिः पूर्णतमः पूर्णतरः पूर्ण इति त्रिधा[12]

15 इति। समयभेदे यथा

सदानन्तैः प्रकाशैः स्वैः[13]

इत्यादि। लीलाभेदे यथा नैत्यिकपाकादौ खण्डितावस्थादौ। राधिका-
दिगोकुललीलासमयानां द्वैविध्याभावात्प्रकाशासिद्धिः। किञ्च। अधुना
श्रीव्रजस्य बहिरङ्गजनैरन्याद्दक्[sic] यत्प्रतीयते तत्तु

20 पित्तेन दूने रसने सितापि
तिक्तायते हंसकुलावतंस[14]

1 AC ०कृष्टत्वो०.
2 नश्वरत्वानश्वरत्वम्।
3 नश्वरकार्यानश्वरकार्यत्वम्।
4 प्रतिबिम्बबिम्बत्वम्।
5 जडचैतन्यत्वम्।
6 नश्वरयोगायोगत्वम्।
7 अपकृष्टोत्कृष्टत्वम्।
8 आदिशब्दाल्लीलापरिकरादीनाम्।
9 AD ०प्रभ्वा०.
10 C अत.
11 BP, X. 33. 3[d].
12 BRS(K), p. 22.
13 LBA, p. 155.
14 *Naiṣadhacarita*, III. 94[c-d].

इतिवत्। केचिन्न[1]यनदोषाच्छङ्खमपि पीतं पश्यन्तीतिवत्। प्रकाशैकरूपाया एव सूर्यकान्तेरुलूकेषु तमोऽभि[2]व्यञ्जकतेतिवच्च। सापराधेष्वयोग्येषु तेषु[3] तस्य[4] स्वरूपाप्रकाशप्रायिकत्वात्। किन्त्वनुत्पन्नभा[51a]वानां साधकानां[5] श्री व्र ज दर्शनेऽपि सम्यग्दर्शनाभावः। अन्यथा

5 कैरपि प्रेमवैवश्यभाग्भिर्भागवतोत्तमैः[6]

इत्याद्यनुपपत्तिः।

मृता यान्ति ममालयम्[7]

इति तु बहिरङ्गजनप्ररोचनमात्रम्।

अथ तत्रस्था न न्द गोपादयः[8]

10 इत्यादि तत्प्रतारणवत्। किञ्च[9]

अदृश्यं चर्मचक्षुषा[10]

इति स्वयम्प्रकाशशक्त्या नेत्रेऽभिव्यक्तत्वात्। तत्तु

अतः श्री कृ ष्ण नामादि न भवेद्ग्राह्यमिन्द्रियैः।
सेवोन्मुखे हि[11] जिह्वादौ स्वयमेव स्फुरत्यदः ॥१४॥[12]

15 इति प्रमाणनिर्णीतमेव। किञ्च

अहो म धु पु री धन्या वै कु ण्ठा च गरीयसी।[13]
दिनमेकं निवासेन ह रौ भक्तिः प्रजायते॥१५॥[14]

इत्यत्र दिनमेकं निवासिनो जनस्य स्थितियोग्यतयास्मद्दृश्यमान म थु रा-मण्डलस्य माहात्म्यमिदम्। परस्परविरोधिमाधुर्यैश्वर्यसेवितस्य नराकृति-

1 C omits केचिन्॰.
2 ABD तमआदि॰.
3 B omits it.
4 कृष्णस्य।
5 C साधकादीनां.
6 LBA, p. 146. BCD omit ॰भागवतोत्तमैः.
7 Cited in LR, p. 566 as from *Bṛhadgautamīyatantra*.
8 PP, VI. 279. 27. See *ante*, p. 48, lines 12-13.
9 A omits it.
10 Cited in LR, p. 566 as from *Bṛhadgautamīyatantra*.
11 BD तु.
12 BRS(K), p. 8.
13 C adds इति after this.
14 Cited in LBA, p. 169 as from *Pātālakhaṇḍa* of PP(?). See *ante*, II. 6.

परब्रह्मणः श्रीकृष्णस्य धामत्वान्माधुर्यैश्वर्ययोर्युगपत्सम्मि[1]लनेन मथुरामण्डलस्य कृष्णवकुण्ठादपि गरीयस्तया कृपार्द्रश्रीकृष्णस्येच्छाप्रकाशिस्वयम्प्रकाशशक्त्याविर्भावितप्रपञ्चगोचरत्व[2]हेतुकसेवोन्मुखतद्गतसाधकभक्तजननिवासादिलेशोत्पादिततत्प्रेमविस्मापितत[3]वनत्वं त-[51b]
5 स्य युक्तमेव। अनेन मधुपुरीरूपस्य मथुरामण्डलप्रभेदस्याप्रयोजकतयाप्रकटप्रकाशनिरसनमप्यायातम्। एवमप्रयोजकतया द्वारकाया अप्रकटप्रकाशनिरसनमपि ज्ञेयम्।

बाल्यपौगण्डलीलागद्वैरूप्याभावतः स्फुटम्।
कैशोरलीला[4]द्वैरूप्याभाव एव सतां मतः ॥१६॥
10 लीलाद्विरूपताभावाद्द्वैरूप्यं धामगं न हि।
तत्तद्विरूपताभावाद्द्वैविध्यं धामगं कथम् ॥१७॥

अत्र तृतीयधामावकरनिरसनेऽपि धामावकरनिरसनं जातम्।[5] तथा द्वितीयलीलावकरनिरसनेऽपि चतुर्थलीलावकरनिरसनं जातम्। एवं प्रथमवैलक्षण्येऽपि ज्ञेयमिति गूढविमतनिरसनं प्रथमवैलक्षण्ये सिद्धमप्यत्र विशेषतो दर्शितम्। अतिगूढविमतनिरसनं ।[6] समर्थाया द्वैरूप्याभावेऽपि लीलाया
15 द्वैविध्याभावेन धामद्वैविध्या[7]भावेऽपि जातप्राकट्यलीलातोऽन्यलीलामननेन[8] [52a] लीलाद्वैविध्यमतिगूढविमतं । तस्य निरसनम्। तद्यथा भक्तिरसामृतसिन्धौ। वत्सले रसे स्थितिं निरूपयद्भिः श्रीगोस्वामिपादैः श्रीकृष्णस्य व्रजे स्थितिवयोलीलाकालपरिमाणसीमा दर्शिता। अत्र[9] वत्सले स्थितिर्यथा विदग्धमाधवे

---

1 BC ०सम्ब०. 2 AD omit ०त्व०
3 AC omit ०तद्०.
4 C omits ०द्वैरूप्याभावतः० लीला.
5 C omits अत्र० जातम्.
6 ननु यथा बाल्यपौगण्डकैशोरगतत्वेन महाप्रभोर्लीलास्त्रिविधाः । तत्राप्रकटलीलायां बाल्यपौगण्डलीलयोरत एव तयोरास्वादनं महाप्रभोः प्रकटलीलायां निजप्रयोजनमिति चेत्तत्राह । महाप्रभोः प्रकटलीलायां बाल्यादिगतत्रिविधलीला जाताः। अप्रकटलीलाविशेषस्वीकारेण लीलाद्वैविध्ये किं प्रयोजनमतो लीलाद्वैविध्यमनर्हं । पूर्वोक्तदोषापातादित्यतिगूढविमतानुसारिखण्डनम्। तेन सुतरामेव गूढविमतखण्डनं जातं । किमुत स्पष्टविमतखण्डनमिति विरोधखण्डने तथा कृष्णलीलायामप्यूह्यम्।
7 C ०द्वैधा०.
8 D ०मनन०.
9 C तत्र.

न न्दः । कुटुम्बिनि कचिदनुरूपा निरूपितास्ति गो कु ले काचिद्बालिका यामुद्वाहयामो वत्सम् ।

य शो [दा] । अज्ज दुद्धमुहस्स वच्छस्स को क्खु दाणिं उव्वाहे ओसरो ।[1]

म धु [म ङ्ग लः] । अपवार्य । वअस्स सच्चं दुद्धमुहोसि जं दुद्धलुद्धाइं गोव-

5 किसोरीसहस्साइं तुज्झ मुहं पिअन्ति ।[2]

कृ ष्णः स्मितं करोति ।

न न्दः । वत्स पश्य पश्य

अहह कमलगन्धेरत्र सौन्दर्यवृन्दे विनिहितनयनेयं त्वन्मुखेन्दो मु कु न्द ।

कुचकलसमुखाभ्यामम्बरक्रोपमम्बा तव मुहुरतिहर्षाद्वर्षति क्षीरधाराम् ॥१८॥[3]

10 इति । र सा मृ त सि न्धौ च

पथि पथि सुरभीनामंशुकोत्तंसिमूर्धा

धवलिमयुगपाङ्गो मण्डितः कञ्चुकेन ।

लघु [52b] लघु परिगुञ्जन्मञ्जुमञ्जीरयुग्मं

व्र ज भुवि मम वत्सः क च्छ देशादुपैति ॥१९॥[4]

15 नव्येन यौवनेनापि दीव्यन् गो पे न्द्र न न्द नः ।

भाति केवलवात्सल्यभाजां पौगण्डभागिव ॥२०॥[5]

**इति । वि द ग्ध मा ध वे ऽ पि नवयौवनस्यैव पौगण्डत्वेन भासमानत्वं दर्शितम् । नवयौवनस्यैव सदास्थायित्वेन ध्येयत्वम् । यथा प्रे मा मृ ते**

नवयौवनसम्भिन्नः[6]

20 **इति । अत एव श्री रा धा याः श्यामात्वस्य[7] सदास्थायित्वेन ध्येयत्वम् ।[8] यथा स्त व मा ला यां**

---

1 The Sanskrit *chāyā*: आर्य दुग्धमुखस्य वत्सस्य कः खल्विदानीमुद्वाहेऽवसरः.

2 The Sanskrit *chāyā*: वयस्य सत्यं दुग्धमुखोऽसि यद्दुग्धलुब्धानि गोपकिशोरीसहस्राणि तव मुखं पिबन्ति.

3 VM, I. 21; p. 20 with को दाणिं क्खु for को क्खु दाणिं.

4 BRS, p. 403.

5 BRS(K), p. 69.

6 It is not traced in the extant *Rādhāpremāmṛta* known also as *Premāmṛta* and *Gopālcarita*.

7 शीतकाले भवेदुष्णां ग्रीष्मकाले च शीतलम्। पद्मगन्धि मुखं यस्याः सा श्यामा परिकीर्तिता॥

8 C omits यथा प्रेमामृते॰ ध्येयत्वम्.

श्या म योर्नववयःसुषमाभ्यां गौरयोरमलकान्तियशोभ्याम् ।
कापि वामखिलवल्गुवतंसी माधुरी हृदि सदा स्फुरतान्मे ॥२१॥[1]

इति । तथा

श्या मे र मा रमणसुन्दरतावरिष्ठ॰[2]

इत्यादि । अत एवास्या वत्सलरसोक्तायाः स्थित्यान्यथात्वेन नवयौवनस्यान्य-[3]थात्वं स्यात् । तस्मिन्सति श्री रा धि का या श्यामात्वस्यान्यथात्वं स्यात् । अत इयमेव स्थितिर्नित्या । स्पष्टलीलानुसारेण द्वा र का तो व्र जा गमनेऽपीयमेव स्थि[53a]तिः । एतदेव नवयौवनमेतदेव श्यामात्वमियमेव कालेयत्ता । एकस्यान्यथात्वे सर्वस्यान्यथात्वं स्यात् । म थु रा गमन-काले यादृशानि गोवत्सवृक्षलताङ्कुरपल्लवकुसुमादीनि श्री कृ ष्णे न दृष्टानि पुन र्व्र ज मागत्य तेन तानि तादृशानि दृष्टानि । अत्राचिन्त्यशक्ति यो ग मा य योः सत्योः किन्नाम दुःखसमाधानमतोऽस्यां नित्यस्थितौ श्री कृ ष्ण-स्य दुग्धमुखत्वस्य सदा स्फूर्त्या श्री व्र जे श्व र्या दिभिस्तस्य परिणयोद्यमः क्वापि न कृत इति ।

सखि हे के शि म थ न मुदारम्[4]

इत्यनेन के शि वधात्परकालीनश्री कृ ष्ण नवयौवनलीलामयश्री गी त-गो वि न्दे श्री न न्द न न्द न स्य तद्दुग्धमुखत्वस्य स्फूर्तिर्यथा

मेघैर्मेदुरम्[5]

इत्यादि । बाल्यं पौगण्डं कैशोरमिति त्रिविधं नित्यम् । ए[6]तत्त्रिविध-वयो[7]गतलीलाः श्री भा ग व ता दिषु दर्शिताः । एतदुपासकाः क्रमेण

---

1 StM, p. 97.

2 StM, p. 79. The full verse is:
श्यामे रमारमणसुन्दरतावरिष्ठ-
सौन्दर्यमोहितसमस्तजगज्जनस्य ।
श्यामस्य वामभुजबद्धतनुं कदाहं
त्वामिन्दिराविरलरूपभरां भजामि ॥

3 C वयसोऽन्य॰.

4 GG, II. 11.

5 GG, I. 1ᵃ. The full verse is:
मेघैर्मेदुरमम्बरं वनभुवः
श्यामास्तमालद्रुमै-
र्नक्तं भीरुरयं त्वमेव तदिमं
राधे गृहं प्रापय ।
इत्थं नन्दनिदेशतश्चलितयोः
प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुना-
कूले रहःकेलयः ॥

6 ABD omit it.

7 C omits ॰वयो॰.

वत्सलप्रेयोमधुररसभक्तानुगताः। तेषां साधनपूर्त्तावेतत्त्रिविधगतश्री भा ग-व ता दिवर्णि[53b]तलीलाप्राप्तिरेव फलं निर्णीतम्। एकस्य फलस्यान्य-थात्वे सर्वस्य फलस्यान्यथात्वं स्यात्।

बाल्यपौगण्डलीलाग्द्वैविध्याभावतः स्फुटम्।
कैशोरलीलाद्वैविध्याभाव एव सतां मतः ॥२२॥
पौगण्डादौ स्थितेः सीमा वत्सले प्रेयसि त्वसौ।
कैशोरादौ यौवने तु नवे ज्ञेयः समृद्धिमान् ॥२३॥
निष्पादितं तृतीयेन वैलक्षण्येन यद्यपि।
प्रायस्तथापि दार्ढ्यार्थमाद्यं निरसनं कृतम् ॥२४॥
गूढस्य विमतस्यातिगूढस्य च निराकृतिः।
आद्ये निरसने जाता मतनिर्धारणान्विता ॥२५॥

विरुद्धजनसमाधानार्थं समृद्धिमत्सम्भोगार्थं वेत्येतद्गोपितम्।[1] अत्र तृतीय-लीलावकरनिरसनं जातम्।[2] इति निरसनचतुष्टये गो कु ला प्रकट-प्रकाशाप्रकटलीलाविशेषनिरसनं प्रथमं पूर्णम्॥

वन्दे श्री रा धि का दीनां भावकाष्ठामहं पराम्।
विना वियोगं सम्भोगं या तुर्यमुदपादयत् ॥२६॥[3]

अथ गूढविमतखण्डनोद्गलकरूपं[4]

## श्री न न्द न न्द न स्य म थु रा दिगमन[54a]निरसनम्।

श्री न न्द न न्द न स्य श्री रा धि का देश्च म थु रा द्वा र का दौ गमनं नास्ति। यथा श्री[5] ल लि त मा ध वे

---

1 CD omit विरुद्धजन॰ वेत्येतद्गोपितम्. D leaves some dots as an indication of lacuna.

2 AC omit अत्र॰ जातम्.

3 ननु श्रीकृष्णस्य बाल्यपौगण्डकैशोरधाम-लीलापरिकराणां नित्यता व्रजे। नित्यं व्रजे स्थितिश्चोक्ता ' हरिणा व्रजदेवीनां विरहो नास्ति कर्हिचिदिति वक्ष्यमाणात्। तदा संक्षिप्तसङ्कीर्णसङ्कल्पसमृद्धिमतां संसिद्धिः कथं भवेत्। पूर्वरागस्तथा मानः प्रेमवैचित्त्य इत्यपि प्रवासश्चेति चतुर्णां विप्रलम्भानां क्रमेण योजनां। अत एव विरहं विना चतुर्थसम्भोगः कथं सम्भवेत्? अथवा तुर्यसम्भोगाभावेऽपि सम्यक्प्रवास-रसास्वादो न ह्योति चेत्तत्राह वन्द इति।

4 C omits अथ॰ रूपं.

5 C omits it.

राधि [ का ]। कथं विअ ।[1]

कृष्णः स्थगितमिवापसव्यतो विलोकते । प्रविश्य गार्गी सहापटीक्षेपेण

एकानंशा। सखि राधे मात्र संशयं कृथाः। यतो भवत्यः श्रीमति
5 गोकुले तत्रैव वर्तन्ते । किन्तु मयैव कालक्षेपणार्थमन्यथा प्रपञ्चितम् । तदेतन्मन-
स्यनुभूयताम् । कृष्णो ऽप्येष तत्र गत एव प्रतीयताम् ।

गार्गी । स्वगतम् । फलिदं मे तादमुहादो सुदेण ।[2]

राधिका प्रणिधाय वैवश्यं नाटयति ।

गार्गी । सहि राहे समस्ससिहि समस्ससिहि ।[3]

10 राधि [ का ] समाश्वस्य तिर्यक् कृष्णमवलोकते ।[4]

**इति। अत एव श्रीरसामृतसिन्धौ श्रीभागवतादिगूढार्थः श्रीगोस्वामिपादैर्दर्शितः। यथा**

प्रोक्तेयं विरहावस्था स्पष्टलीलानुसारतः ।
कृष्णेन विप्रयोगः स्यान्न जातु व्रजवासिनाम् ॥२७॥[5]

15 **अस्यार्थः।[6] स्पष्टलीला श्रीवसुदेवनन्दन श्री[7] नन्दनन्दनयो-रेकत्व[8][54b]व्यञ्जिका। अस्पष्टलीला गढलीला तयोर्भेदव्यञ्जिका। तथा हि यामलवचनं**

कृष्णोऽन्यो यदुसम्भूतो यस्तु गोपेन्द्रनन्दनः ।
वृन्दावनं परित्यज्य स कचिन्नैव गच्छति ॥२८॥[9]

20 **इति। श्रीभागवतामृते च**

---

1 The Sanskrit *chāyā*: कथमिव.

2 The Sanskrit *chāyā* : फलितं मे तातमुखाच्छ्रुतेन.

3 The Sanskrit *chāyā* : सखि राधे समाश्वसिहि समाश्वसिहि.

4 LM, X. 37 with कथम्विअ for कथं विअ, श्रीमद्गोकुले for श्रीमति गोकुले, ०क्षेपार्थ० for ०क्षेपणार्थ०, and ०दाद० for ताद०. Mss. सहि राधे for सहि.

5 BRS(K), p. 67.

6 C omits it.

7 C omits ०श्री०.

8 C ०रेकात्म०.

9 Cited in LBA, p. 162 with यः पूर्णः सोऽस्त्यतः परः in *b*. B has कृष्णान्यो यदुसम्भूतः omitting the rest of the verse.

अथ प्रकटरूपेण कृष्णो यदु[1]पुरीं व्रजेत् ।

व्रजेशजत्वमाच्छाद्य स्वं व्यञ्जन् वासुदेवताम् ॥२६॥[2]

इति । प्रकटरूपेण जगति स्पष्टरूपेण वसुदेवनन्दनरूपेणेत्यर्थः । न तु गूढरूपेण नन्दनन्दनरूपेणेत्यर्थः । स्वं व्रजेशजत्वमाच्छाद्य

5 बहिरङ्गजनानां नेत्रागोचरीकृत्य

अत्र प्रकटलीलायामेव स्यातां गमागमौ ।

गोकुले मथुरायाञ्च द्वारकायाञ्च शार्ङ्गिणः ॥३०॥[3]

इति च । अस्यार्थः । प्रकटलीलायां जगति स्पष्टलीलायां नन्दनन्दनवसुदेवनन्दनयोरेकत्वव्यञ्जिकायां न तु तयोर्भेदव्यञ्जिकायां गूढलीलायाम् ।

10 व्रजे प्रकटलीलायां त्रीन्मासान्विरहोऽमुना[4] ।

अत्राप्यजनि विस्फूर्तिः प्रादुर्भावोपमा हरेः ॥३१॥[5]

इति च । अस्यार्थः ।[6] [55a] प्रकटलीलायां स्पष्टलीलायां न तु गूढलीलायां त्रीन्मासानिति नन्दनन्दनस्य मथुरागमनस्फूर्तेर्बाहुल्यात् । श्रीमदुज्ज्वलनीलमणौ च

15 हरेर्लीलाविशेषस्य प्रकटस्यानुसारतः ।

वर्णिता विरहावस्था व्रजवामभ्रुवामसौ ॥३२॥

वृन्दारण्ये विहरता सदा रासादिविभ्रमैः ।

हरिणा व्रजदेवीनां विरहो नास्ति कर्हिचिद् ॥३३॥[7]

इति । व्याख्या । प्रकटस्य जगति स्पष्टस्य व्रजेन्द्रनन्दनवसु-

20 देवनन्दनयोरेकत्वव्यञ्जकस्य लीलाविशेषस्य न तु तयोः पृथक्त्वव्यञ्जकस्य लीलाविशेषस्य । रासादिविभ्रमै रासादिमहाभावविलासैः ।

श्रीमद्भागवते स्पष्ट[8]लीला यद्वत्स्मृता हरेः ।

तथा श्रीराधिकादीनां सा श्रीललितमाधवे ॥३४॥

---

1 A मधु०.

2 LBA, p. 162 with स्वां for स्वं in *d*.

3 LBA, p. 156 with तत्र for अत्र in *a*. 4 कृष्णेन ।

5 LBA, p. 163.

6 C omits it.

7 UN, pp. 560-62 with गोष्ठवाम० for व्रजवाम० in *d* of verse 32, and विरहोऽस्ति न for विरहो नास्ति in *d* of verse 33.

8 C स्पष्टा.

अत एव श्री की र्त्ति दा प्रसूताया[1] गर्भस्य यो ग मा या कृष्टत्वेन वि न्ध्य-दारप्रसूताया एकत्वव्यञ्जिका लीला स्पष्टा, तयोर्भेदव्यञ्जिका गूढा। श्री ल लि त मा ध व गता स्पष्टा द्विधा, श्री व्र ज गता [55b] द्वा र का-गता चेति। तत्र[2] द्वा र का गता केवलकैशोरसम्बन्धित्वेनैकविधा।
5 श्री व्र ज गता तु बाल्यपौगण्डकैशोरगतत्वेन त्रिविधा। एकविधस्य कादाचित्कत्वेन[3] त्रिविधस्य कादाचित्कत्वमत[4] एव त्रिविधं नित्यम्। तत्र[5] द्वा र का गतायाः स्पष्टाया निमित्तानि प्रस्तावनाङ्कमुखयोर्लिखितानि न तु श्री व्र ज लीलाया, अस्यास्तेषां[6] वि द ग्ध मा ध वे लिखितत्वात्। अत एव[7] प द्या व ल्या ञ्च

10 अथ नित्यलीला।

वृ न्दा व ने मु कु न्द स्य नित्यलीला विराजते।
स्पष्टमेषा रहस्यत्वाज्जानद्भिरपि नोच्यते ॥३५॥[8]

नित्यलीलाविच्छिन्नलीला।

ताभिर्नित्यविहारमेव तनुते वृ न्दा व ने मा ध वो
15 गोष्ठाम्भोजमुखीभिरित्यतिमनाक्प्रोचे प्रियायै ह रः।
लीलारत्नरहस्यता व्र ज प ते र्भूयस्यहो पश्य यत्
तत्त्वज्ञोऽपि पुरान्तरे[9]ऽवगमनं व्याचष्ट वै या स किः ॥३६॥[10]

इत्यनेन म थु रा गमनस्य तात्त्विकत्वाभावाच्छ्री न न्द न न्द न स्य म थु रा-[56a]गमनं श्री रु द्रे ण निराकृतम्। अत एव म थु रा यां श्री न न्द-
20 न न्द न स्य गमनं प्रथमं निराकृत्य पश्चादथ स्पष्टलीलानुसारेण भाविनि

---

1 श्रीराधिकायाः।

2 C अत्र adding after it श्री०.

3 ननु व्रजादपि द्वारकां गत एवेति व्रजे कैशोरस्य कादाचित्कत्वमिति चेत्तत्राह।

4 CD तद्०.

5 C अत्र adding after it श्री०, D explains: ललितमाधवे.

6 C inserts here श्री०. D explains: व्रजलीलाया निमित्तानामिति यावत्.

7 C inserts श्री०.

8 PA, 312 *Ka*.

9 मथुरादौ।

10 PA, 312 *Kha* with ०रित्यभि for ०रित्यति० in *b* and च गमनं in *d*, which is better.

हरेर्मथुराप्रस्थापने[1] श्रीराधासखीवाक्यमित्यादि दर्शितं श्रीगोस्वामिपादैः। अत एव श्रीरसामृतसिन्धौ तैः[2] श्रीकृष्णे मथुरां गतेऽपि तस्य नन्दनन्दनरूपेण श्रीदामादिभिर्विहारो दर्शितः। यथा

5 प्रोत्साहयिष्यसितरां किमिहाग्रहेण
मां केशिसूदन विदन्नपि भद्रसेनम्[3]

इति।

मानाय केशिमथने सखिनास्मि शक्तः

इत्यादि च। केशिवधाधः स्पष्टलीलायां तादृशलीलास्वाच्छन्द्यायान्तर-
10 कालासम्भवात्[4]। ननु यथा श्रीकृष्णस्य नन्दनन्दनत्वं गूढं तथा श्रीराधिकादीनां स्वीयात्वं गूढम्। यथा तस्य नन्दनन्दनान्य-[5] वसुदेवनन्दनत्वं स्पष्टं तथा श्री[6] राधिकादीनां स्वीयान्य-[7] परकीयात्वं स्पष्टम्। यथोपासनायां गूढं नन्दनन्दनत्वं प्रकाश्यते तथा गूढं स्वीयात्वं स्पष्टपरकीयात्वनिरसनेन प्रकाश्यते। अतो नन्दा-
15 त्मजत्ववत्[8] स्वीयात्वमाया[56b]तमिति चेत्तत्राह। श्रीनन्दात्मजत्वमन्यत्र[9] गूढमपि श्रीव्रजे यथा स्पष्टं श्रीराधिकादीनां तथा परकीयात्वं श्रीव्रजे स्पष्टम्। श्री[10] व्रजे यदेव स्पष्टं तदेव गूढं। स्पष्टास्पष्टत्वेन द्वैविध्यं नास्त्येव। नन्दात्मजत्वेन लीलायाः श्रीव्रजगताया द्वैरूप्यं न स्यात्। स्वीयात्वेन त[11]द्वै[12]रूप्यं स्यात्समर्थाहानिश्च स्यात्। अतः

1 C ॰स्थाने॰
2 गोस्वामिपादैः।
3 Cited in BRS, p. 447 with प्रोत्साहयस्यतितरां किमिवाग्रहेण in *a*. It is attributed to *Harivaṃśa*.
4 केशिवधस्य परदिवसे मथुरागमनहेतोः।
5 ABD ॰नन्दनेऽन्य॰.
6 C omits it.
7 BC omit it.
8 नन्दात्मजत्वं यथा गूढं तथा राधाया स्वीयात्वं गूढम्।
9 मथुरादौ।
10 ABD omit it.
11 लीलायाः।
12 C तत्तु द्वै॰.

परकीयात्वं नित्यत्वेनोपासनागतमेव। किञ्च[1] श्रीकृष्णोऽक्रूरेण मथुरां नीत इत्यादि[2]स्फूर्तिः श्रीराधिकादीनां क्वचित्क्वचिद्भवति। तां

न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते[3]

इत्यादिनातिरसपुष्टीकृतामालम्ब्य विरहवर्णनम्। एतदपेक्ष्य तैः श्रीभागवतामृते विरह[4]व्यवस्था दर्शिता।

व्रजे प्रकटलीलायां त्रीन्मासान्विरहोऽमुना।
अलाप्यजनि विस्फूर्तिः प्रादुर्भावोपमा हरेः ॥३७॥

त्रिमास्याः परतस्तेषां[5] साक्षात् कृष्णेन सङ्गतिः।
आविर्भावागतिभ्यां सा द्विप्रकारास्य सम्भवेत् ॥३८॥[6]

व्रजे विहरमाणेऽस्मिन् [57a] प्रादुर्भूय हरौ तदा।
भवेत्तस्य पुरे यात्रा स्वप्नवद् व्रजवासिनाम् ॥३९॥[7]

इति। कादाचित्कीं तां स्फूर्तिमवेक्ष्य श्रीराधिकादीनां प्रोषितभर्तृकात्वं, न तु तां विनान्यदा[8]। प्रोषितभर्तृकाया लक्षणं

दूरदेशं गते कृष्णे भवेत्प्रोषितभर्तृका।
प्रियसङ्कीर्तनं दैन्यमस्यास्तानवजागरौ ॥
मालिन्यमनवस्थानं जाड्यचिन्तादयो मताः ॥४०॥[9]

तथा

हृष्टाः स्वाधीनपतिका वास[10]सज्जाभिसारिकाः।
मण्डिताश्च पराः पञ्च खिन्ना मण्डनवर्जिताः ॥४१॥[11]

---

1 ननु यदि व्रजे कृष्णो गूढरूपेण सदा तिष्ठति, तदा श्रीराधिकादीनां विरहः कथं स्यात्तत्राह किञ्चेति।

2 ABD इति॰.

3 UN, p. 507.

4 ABD add ॰स्य.

5 व्रजवासिनाम्।

6 LBA, p. 163.

7 LBA, p. 164.

8 C omits प्रोषित॰ विनान्यदा.

9 UN, pp. 138-39 with कान्ते for कृष्णे mentioning the latter as a variant.

10 ABD add ॰कृ॰ which affects metre.

11 UN, p. 141.

इति। यदो द्ध वो गो कु ल मायातस्तदा तासां सा स्फूर्तिर्नास्ति। अत एव प्रोषितभर्तृकालक्षणं तदा तासु नास्ति। यथा श्री द श मे

गायन्तीभिश्च कर्माणि शुभानि ब ल कृ ष्ण योः।
स्वलङ्कृताभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥४२॥[1]

5 तथा

गोप्यः समुत्थाय निरूप्य दीपान्
वास्तून्समभ्यर्च्य दधीन्यमन्थन्।
ता दीपदीप्तैर्मणिभि[2]र्विरेजू-
रज्जुर्विकर्षद्भुजकङ्कनस्रजः।
10 चलन्नितम्बस्तनहारकुण्डल-
त्विषत्[3]कपोलारुणकुङ्कमाननाः ॥४३॥
उद्गायतीनामर[57b]विन्दलोचनं
व्र जा ङ्गनानां दिवमस्पृशद्ध्वनिः।
दध्नश्च निर्मन्थनशब्दमिश्रितो
15 निरस्यते येन दिशाममङ्गलम् ॥४४॥[4]

इति। प्रातस्तु रथं दृष्ट्वा सा स्फूर्तिर्जाता। यथा तत्रैव

भगवत्युदिते सूर्ये व्र ज द्वारि व्र जौ कसः।
दृष्ट्वा रथं शातकौम्भं कस्यायमिति चाब्रुवन् ॥४५॥[5]
अ क्रू र आगतः[6]

20 इत्यादि।

व्र जौ कसो गोप्यः[7]

---

1 BP, X, 46. 11.
2 C °र्वैलिभि°.
3 C °त्विषः.
4 BP, X. 46. 44-46.
5 BP, X. 46.47 with नन्दद्वारि for व्रजद्वारि.
6 BP, X. 46. 48ª.
7 SD on BPª, X. 46. 47.

इति स्वामी। एतया स्फूर्त्या तासां प्रोषितभर्तृकालक्षणं सम्पादितम्। अत एवोद्धव आगत्य व्रजं परमानन्दमग्नं दृष्टवान्। यथा तत्रैव

प्राप्तो नन्दव्रजं श्रीमान्निम्लोचति विभावसौ।
छन्नयानः प्रविशतां पशूनां खुररेणुभिः ॥४६॥
5 वासितार्थेऽभियुध्यद्भिर्नादितं शुष्मिभिर्वृषैः।
धावन्तीभिश्च वास्राभिरुधोभारैः स्ववत्सकान् ॥४७॥
इतस्ततो विलङ्घद्भिर्गोवत्सैर्मण्डितं सितैः।
गोदोहशब्दाभिरवं वेणूनां निःस्वनेन च ॥४८॥
गायन्तीभिश्च[1]

10 इत्यादि च।

अग्न्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः।
धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम् ॥४९॥
सर्वतः पुष्पितवनं द्विजालिकुल[58a]नादितम्।
हंसकारण्डवाकीर्णैः पद्मषण्डैश्च मण्डितम् ॥५०॥[2]

15 इति।[3] अत एव

भवतीनां वियोगो मे न हि सर्वात्मना क्वचित्[4]

इति।[5] अस्यार्थः। सर्वात्मना सर्वप्रकाशेन' न[6] किन्तु वसुदेवनन्दनरूपेण प्रकाशेन। श्रीनन्दनन्दनरूपेण तु पूर्णतमप्रकाशेन वियोगो नास्त्येव। यद्वा। सर्वात्मना सर्वप्रकारेण' न किन्तु वसुदेव-
20 नन्दननन्दनन्दनयोरेकत्वव्यञ्जकप्रकारेण' न त्वनयोः पृथक्त्व-व्यञ्जकप्रकारेण। यद्वा। सर्वेषां प्रकाशानामात्मना मूलभूतश्रीनन्द-

1 BP, X. 46. 8-11a.
2 BP, X. 46. 12-13.
3 B omits it.
4 BP, X. 47. 29a-b.
5 B omits it.
6 ABC omit it.

न न्द ने नेति। अत्र व्यतिरेकप्रदर्शनम्। श्री य शो दा यां[1] श्री दे व-क्या श्च प्रकाशद्वयेन जन्म

अथाहमंशभागेन[2]

इत्यादौ निर्णीतम्। श्री कृ ष्णे म थु रां गते श्री न न्द न न्द न रूपेण
5 प्रकटविहरणाभावे तस्य श्री य शो दा यां जन्मनोऽप्रयोजकत्वम्।
तस्मिंश्च सति श्रीभगवत्या[3] प्रार्थितस्य श्री कृ ष्णे न दत्तस्य वरस्य
व्यभिचारः। स वरो यथा वि द ग्ध मा ध वे

पौ र्ण [ मा सी ]। सानन्दास्रम्। गो कु ल बान्धव बाढमवन्ध्यजन्मास्मि कृता। तथापि किञ्चि[58b]दभ्यर्थये।

10 प्रथयन्गुणवृन्दमाधुरी-
मधि वृ न्दा व न कुञ्जकन्दरम्।
सह रा धि क या भवान्सदा
शुभमभ्यस्यतु केलिविभ्रमम् ॥५१॥[4]

०कृ ष्णः। स्मित्वा। भगवति तथास्तु।[5]

15 दा न[6] के लि कौ मु द्या श्च

पौ र्ण [ मा सी ]। सर्वानन्दकदम्बमूर्ते यद्यपि बाढमेतया हृदयङ्गमया ते लीलया कृतार्थास्मि तथापि किमप्यभ्य[7]र्थयितुमिच्छामि।

कृ ष्णः। सहर्षम्। भगवति शीघ्रमाज्ञापय किं ते भूयः प्रियं करवाणीति।

---

1 श्रीवराहपुराणे
नन्दपत्न्यां यशोदायां
मिथुनं समजायत।
गोविन्दाख्यः पुमान्कन्या
चाम्बिका मथुरां गता॥

2 BP, X. 2. 9ᵃ. The full verse is:
अथाहमंशभागेन
देवक्याः पुत्रतां शुभे।
प्राप्स्यामि त्वं यशोदायां
नन्दपत्न्यां भविष्यसि॥

3 पौर्णमास्या॰

4 VM, VII. 61; p. 262 with गोकुलबन्धो for गोकुलबान्धव.

5 VM, VII; p. 262.

6 C श्रीदान॰.

7 A ॰प्यत्य॰. D omits ॰भ्य॰.

पौ र्ण [ मा सी ]। निरवद्यकेलिमाधुरी[1]सुधासिन्धौ साधीयसि प्रसङ्गे कृता हि प्रार्थना निश्चितमेव फलगर्भिणी भवेदित्यधुना निवेदयामि।

सहचरीकुलसङ्कुलया गुणै-
रधिकया सह रा धि क यानया।
5 त्वमिह नर्मसुहृन्मिलितः सदा
घटय मा ध व घट्टविलासिताम्[2] ॥५२॥

०कृ ष्णः। सहर्षाम्युपगमम्। भगवति तथास्तु।[3]

**इति। अप्रकटरूपेण सदाविहरणाद्वरस्य सिद्धिरिति चेत्तदा प्रार्थनस्य वरस्य च पिष्टपेषण[4]न्यायेन व्यर्थत्वं स्यादिति। किञ्च।[5] व सु दे व न न्द न स्य 10 म थु रा दौ प्रकटलीलोपयोगिरूपान्तरेण गतेषु न न्दा [59a]दिषु न न्द-न न्द न स्येव पितृत्वादिबुद्धि र्न न्द न न्द न स्य तत्रा[6]विष्टत्वात्। तेषामपि तया स्फूर्त्या तस्मिन्[7] स्वपुत्रादिबुद्धिः। द न्त व क्र वधानन्तरं श्री व सु-दे व न न्द न स्य श्री व्र जा गतस्य श्री न न्द न न्द ने प्रवेशे सति तेषां[8] सा कचित्कचिदुदयं प्राप्ता स्फूर्तिर्निरस्ता समृद्धिमान्सम्भोगश्च जातः। 15 यथा पा द्मे[9]**

का लि न्द्याः पुलिने रम्ये पुण्यवृक्षसमन्विते।
गोपनारीभिरनिशं क्रीडयामास मा ध वः ॥५३॥

---

1 ABD omit ०माधुरी०.

2 दानलीलाम्।

3 DKK, 413-14.

4 ABD ०पिषिता०.

5 ननु पौर्णमासीप्रार्थनान्द्वयविलासदत्तवरेण नन्दनन्दनस्य व्रजे सदा स्थितिरिति निश्चितञ्चेत्तदा मथुरागते कृष्णे नन्दादीनां कथं पुत्रादिबुद्धिर्नन्दादिषु वा तस्य कथं पितृत्वादिबुद्धिस्तत्राह किञ्चेति।

6 वासुदेवे।

7 मथुरागते कृष्णे।

8 नन्दादीनाम्।

9 अत्र मासद्वयमित्यनेनैकादशसमास्तत्र व्रजेऽवात्सीदित्यत्र निर्णीतः प्रकटानुसार एव। एकादशसमावासानन्तरं दन्तवक्त्रवधान्ते पुनर्व्रजागमनं श्रीकृष्णस्य सूचितम्। अत एवैकात्मव्यञ्जकरूपेण मथुरां न गत्वा पुनरागमने प्रमाणं सुसङ्गतमेव तद्यथा पाद्मे।

रम्यकेलिसुखेनैव गोपवेशधरः प्रभुः ।
बहुप्रेमरसेनात्र मासद्वयमुवास ह ॥५४॥[1]

अस्यार्थः । गोपनारीभिर्गोपैर्व्यूढा वयमित्यभिमानवतीभिरिति समर्था रतिर्दर्शिता । बहुप्रेमरसेनेति रम्यकेलिसुखेनेति चानिशमिति च प्रेम-
5 बाहुल्येनोपभोगातिरेकात्सम्भोगो दर्शितः । गोपवेशधरः प्रभुरिति पूर्णतमत्वं दर्शितम् । मासद्वयमिति तदन्ते एकरात्रेर्महाकल्पततित्वप्राप्त्या श्री कृ ष्ण-लीलाततितत्कालयोरन्ताभावेऽपि श्री व्र ज लीलायामिय[59b]त्तामापन्नायां सपरिकरस्य स्वस्य श्री न न्द न न्द न[2] रूपस्यान्तिमलीलावलितस्य[3] प्रपञ्चागोचरीकरणाद् व्र ज जनालक्ष्यतया व सु दे व न न्द न न्द न-
10 रूपेण पुन द्वा र का गमनाच्च ।

विना रहस्यप्रव्यक्तिं स्पष्टार्थः स्यान्निराकृतः ।
नेति हेतोर्मया ह्यत्र रहस्योद्घाटनं कृतम् ॥५५॥
विना द्वैरूप्यमफलं द्वैविध्यमिति पण्डितैः ।
द्वैविध्यमिति हेयं स्याद्धामलीलागतं स्फुटम् ॥५६॥

15 इति निरसनचतुष्टये न न्द न न्द न स्य म थु रा दिगमननिरसनं द्वितीयं पूर्णम् ॥

अथाप्रकटलीलागतस्वकीयात्ववादरूपविमतदुःशैलारोहणसोपानपञ्चक-निरसनम् ।

सोपानानां दशत्वेऽपि तत्पञ्चकमिदं स्मृतम् ।
20 सोपानानि विमतानि स्पष्टस्य विमतस्य षट् ॥५७॥[4]

1 PP, VI. 279. 25-26 with वृत्तसमावृते for वृत्तसमन्विते, केशवः for माधवः, हरिः for प्रभुः and बद्धप्रेम॰ for बहुप्रेम॰. Cited in LBA, p. 166 with वृत्तसमाचिते for वृत्तसमन्विते and केशवः for माधवः.

2 C adds ॰स्य after it.

3 एकादशसमास्तत्र व्रजेऽवात्सीदित्यादिवलितस्य ।

4 C omits this verse.

## तत्र योगमाया[1] कार्यस्य[2] नश्वरत्वहेयत्वनिरसनम् ।

श्रीमद्भागवता स्तौमि सिद्धान्तान्परमाद्भुतान् ।
यत्र मायावादमात्रं सर्वथैव तिरस्कृतम् ॥५८॥

चिच्छक्तेर्वृत्तिप्रभेदरूपा योगमाया । अन्यथा तस्या भगवत्परिकर-
5 विषयत्वा[60a]द्भगवत्परिकरेषु जीवसादृश्येन दोषापातात्तस्या वैशिष्ट्या-
प्रयोजकत्वाच्च । सा कुत्रापि मायाशब्दवाच्या स्यात् । तथा हि

माया च योगमाया च तथेच्छाशक्तिरेव च ।
मायाशब्देन भण्यन्ते शब्दतत्त्वार्थवेदिभिः ॥५६॥

अत एव

10 मायाकलिततादृक्स्त्रीशीलनेन[3]

इत्यत्र ।

पौर्ण [मासी] । पुत्ति मायाविवर्तोऽयम्[4]

इत्यत्र च ।

चन्दावली पहुदीणं उव्वाहोवि मायाए णिव्वाहिदो[5]

15 इत्यत्र च मायाशब्देन योगमाया कथ्यते । अत एव आह्निककौमुद्यां

छायाकायकुलं विधाय सुदृशां भर्तॄन्गुरूनप्यथ
स्वस्वभ्यासगता इव प्रविदुषः सम्मोहयन्ती मिथः ।
साहाय्यं कुरुतेतरां भगवती श्रीयोगमायैव सा
तासां तास्तु न तद्विदन्ति तदहो जानातु कोऽन्योऽप्रसा ॥६०॥

20 श्रीयोगमायेत्यत्र श्रीति तथा भगवतीति च परमसमादरविषयत्वं ।

1 C adds °याः.
2 C °कार्यमाण°.
3 UN, p. 58.
4 LM, I. 25.
5 LM, I. 44. The Sanskrit *chāyā* is: चन्द्रावलीप्रभृतीनामुद्वाहोऽपि मायया निर्वाहितः.

चिच्छक्तिवृत्तिभेदस्व[1]रूपत्वेन यो ग मा या यास्तत्कार्यस्य हेयत्वनश्वरत्वाभावात्। बहिरङ्गा माया तु तदाभासरूपा। अत एवाभेदारो[60b]पणेन यो ग मा या यां तस्या वृत्तेरारोपणं क्वचिद्दृश्यते। यथा

यया सम्मोहितं जगद्[2]

5 इति। किञ्च यो ग मा या या लीलापरिकरविषयत्वेऽपि नित्यवैभवत्वेऽपि मायाया इव वृत्तिद्वय[3]लक्षितत्वम्। मायाया वृत्तिद्वयं यथा

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्याद् ह्यात्मनो मायां यथाभासो यथा तमः ॥६१॥[4]

इति। वृत्तिद्वयस्यापि विषयबाहुल्यवैविध्याभ्यामवान्तरवृत्तीनां[5] नित्य-
10 त्वेऽपि कासाञ्चिदवान्तरवृत्तीनां[6] सदा प्रयोजकत्वं कासाञ्चिन्न।

तिरस्कृतं[7] तृतीयेन वैलक्षण्येन सुभृशम्।
सोपानमाद्यं तदपि दृढत्वार्थं निराकृतम् ॥६२॥
वैलक्षण्यं यो ग मा या माययोः परमं स्फुटम्।
सोपानत्वान्न लिखितं वैलक्षण्यचतुष्टये ॥६३॥[8]
15 अविज्ञाय न जानाति लीलामत्त्वं कश्चिज्जनः।
मायाया यो ग मा या याः सालक्षण्यनिराकृतिः।
वैलक्षण्यस्वरूपस्य मतस्यात्र प्रदर्शनात् ॥६४॥

अत्र यो ग मा या कार्यस्य नश्वरत्वेनोपपत्नीभावाभिमानात्मतया पत्नीभावाभि[61a]मानात्मतया[9] समर्थाया यद्वैरूप्यं तस्य विमतस्य खण्डनेन
20 धामलीलाद्वैरूप्यरूपगम्यस्पष्टविमतखण्डनं जातम्। इति निरसनचतुष्टये तृतीयनिरसने प्रथमसोपाननिरसनम् ॥

---

1 C omits ०स्व०.
2 BP, X. 1. 25b.
3 प्रकाशिका वृत्तिराच्छादिका वृत्तिश्चेति वृत्तिद्वयम्।
4 BP, II. 9. 33 with तद्विद्या-दात्मनो० in c.
5 बाहुल्यवैविध्ये द्वितीयवृत्तेः सर्वासामवान्तरवृत्तीनाम्।
6 C omits नित्यत्वेऽपि० वृत्तीनां.
7 आच्छादिकावृत्तेः सालक्षण्यम्।
8 C omits this line.
9 C omits पत्नी० मानात्मतया.

श्रीम त्कृ ष्ण प्रियामुख्यां श्री रा धा मभिवादये ।
महारासनिदानं यत्[1]किलकिञ्चितमाधुरी ॥६५॥

## अथ वस्त्रहरणलीलायां श्री रा धि का दीनामनूढात्व-वादनिरसनम् ।

5 ननु श्री ल लि त मा ध वे चि त्र द र्श न नाम्नि नवमेऽङ्के

न व [वृ न्दा] । पुरस्तादिदं वासोहरणतीर्थम् ।

कृ ष्णः । प्रिये वि शा खा याः पृष्ठतो मूर्ध्नि कृताञ्जलिरवस्थिता केयं न परिचीयते ।

रा धा । सलज्जमात्मगतम् । मं लिहिदं जाणन्तो च्चेअ परिहसेदि । प्रकाशम् । एसा. प उ मा ।[2]

10 कृ ष्णः । पद्माद्वि प द्मा याः सव्यतः ।

रा धा । सासूयम् । अलं अत्तणो गुणं वित्थारिअ ।[3]

कृ ष्णः ।

शिरसि कुरुत पाणिद्वन्द्वमादत्त मुग्धाः
सिचयमिति मदुक्त्या भुग्नदृष्टिस्थितायाः ।
स्फुरदधरमुदञ्चन्मन्दहास्यं तवास्यं
15 [61b]सरुदितमनुबन्धभ्रूविभेदं स्मरामि ॥६६॥[4]

इति । रा धि का दीनां कन्यागणमध्ये स्थित्या कन्यात्वमतो गान्धर्व-विवाहोऽप्यनुमीयते । पश्चात् कं स जभये सत्यन्यगोपैः सह कं स वञ्चनार्थं प्रत्यायितो विवाहः । ततः परोढात्वम् । अत एव गोपैः सह विवाहात्पूर्वं समर्थारतिसद्भावात्[5] परोढात्वाभिमानं विनापि सा[6] पत्नीभावाभिमाना-

---

1 यस्या राधायाः ।

2 The Sanskrit *chāyā* : मां लिखितां जानन्नेव परिहसति । एषा पद्मा.

3 The Sanskrit *chāyā* : अलमात्मनो गुणं विस्तार्य.

4 LM, IX. 35.

5 BD ०सम्भव०. C सम्भवात.

6 समर्था ।

त्मतयापि स्यादित्यायातम्। किञ्च गान्धर्वविवाहमर्यादापूर्वकसङ्गमात्पश्चात्प्रकटविवाहोऽपि गम्यः स्यादिति चेत्तत्राह श्री द श मे ऽकविंशेऽ[1]ध्याये परोढानां शरदि पूर्वरागमुक्त्वा द्वा विं शे हेमन्ते कन्यानां[2] पूर्वराग उक्तः। यथा श्री वै ष्ण व तो ष ण्या म्

5 एवं व्यूढानां पूर्वानुरागं शरत्प्रसङ्गे वर्णयित्वा हेमन्तप्रसङ्गे कुमारीणां पूर्वानुरागप्रक्रिया[3]माह[4]

इति। तथा

यातावला व्र जं सिद्धा मयेमा रंस्यथ क्षपाः[5]

इत्यस्य व्याख्यायां

10 सिद्धा यथासङ्कल्पमङ्गीकृता एवेत्यर्थः। [62a] एवमङ्गीकारमयं विवाहमेव सम्पाद्य तत्फलं सम्पादयति मयेति। अत एव ता अप्याग्रहेण पत्यन्तरं नाङ्गीकृतवत्य एवेति। तथापि रहोव्यूढत्वेनान्यव्यूढावद्[6] गूढमेवारमन्त इति च बुध्यते। एतदन्या[7] एव हि परकीयायमाना इति[8]।

एतत्पर्यन्तं तो ष णी व्याख्यानम्[9]। वे णु गी ता त्पूर्वं श्री रा धि का दिभिः
15 सार्धं श्री कृ ष्ण स्य सम्भोगः श्री गो स्वा मि चरणैः श्रीम दु ज्ज्व ल-नी ल म णौ दर्शितः। तथा

अथ मादनः।

सर्वभावोद्गमोल्लासी मादनोऽयं परात्परः।
राजते ह्लादिनीसारो रा धा यामेव यः सदा ॥६७॥[10]

---

1 C ०कविंशा०.

2 C कन्यका०.

3 AB ०प्रक्रिया०.

4 VT on BP, X. 22. 1.

5 BP, X. 22. 27a-b. ABC omit मयेमा० क्षपाः.

6 परकीयावत्।

7 एतत्स्वकीयकन्याभ्योऽन्याः परकीयाः कन्याः।

8 VT on BP, X. 22. 21 (= X. 22. 27.) The variants found there are indicated below: सिद्धा इति for सिद्धा०, ०सङ्कल्पं मयाङ्गी० for ०सङ्कल्पमङ्गी०, तदङ्गभूतं फलविशेषं for तत्फलं.

9 BC omit एतत्पर्यन्तं० व्याख्यानम्.

10 UN, p. 499.

अतेर्ष्यायां अयोग्येऽपि प्रबलेर्ष्याविधायिता ।
सदा भोगेऽपि तद्गन्धमात्राधारस्तवादयः ॥६८॥[1]

श्री द श मे

पूर्णाः पुलिन्द्य उरुगायपदाब्जराग-
5 श्रीकुङ्कुमेन दयितास्तनमण्डितेन[2]

इत्यादि । श्री रा धा याः पूर्वमेव च न्द्रा व ल्या सह सङ्गतिः प्रसिद्धैव ।

मयेमा रंस्यथ क्षपाः[3]

इति प्रतिज्ञाताभ्यः क्षपाभ्यः पू[62b]र्वं ताभिः[4] सह सम्भोगः श्री रा स-प ञ्चा ध्या य्यां[5] स्पष्ट एव

10 यर्ह्यम्बुजाक्ष तव पादतलं र मा या
दत्तक्षणं क्वचिदरण्यजनप्रियस्य
अस्प्राक्ष्म[6]

इत्यादि । ननु पूर्वरागे किं मादनो नोदेति तत्राह। तत्र[7] मानस्याप्युदयो न किमुत मादनस्य । तथा हि

15 रागो[8]ऽनुरागतामादौ स्नेहः प्राप्यैव सत्वरम् ।
मानत्वं प्रणयत्वञ्च क्वचित्पश्चात्प्रपद्यते ॥६९॥
अत एवात्र शास्त्रेषु श्रूयते रा धि का दिषु ।
पूर्वरागप्रसङ्गेऽपि प्रकटं रागलक्षणम् ॥७०॥[9]

इति ।

---

1 UN, p. 501. C ०स्तुतिर्यथा for ०स्तवादयः. ABD add after it another line, *viz*, सदा भोगेऽपि तद्गन्धमात्राधारस्तुतिर्यथा, which is redundant.
2 BP, X. 21. 17$^{a-b}$.
3 BP, X. 22. 27$^{b}$.
4 राधाचन्द्रावल्यादिभिः ।
5 ABD ०पञ्चाध्याये.
6 BP, X. 29. 36$^{a-c}$. B omits पादतलं० अस्प्राक्ष्म.
7 C अत्र.
8 C रागा०. See *ante*, I. 31-32.
9 UN, p. 504.

शिरसि कुरुत पाणिद्वन्द्वमादत्त मुग्धाः[1]

इत्यत्र श्री रा धि का यां किलकिञ्चितं वर्णितम्। मानस्तु तदन्तर्भूत एव। यथा

भुग्नदृष्टि[2]

इति।

अनुबन्धभ्रुविभेदम्[3]

इति च[4]। किलकिञ्चितन्तु संक्षिप्तसम्भोगेऽपि नोदेति किमुत पूर्वरागे। तथा हि तल्लक्षणं

युवानौ यत्र संक्षिप्तान्साध्वसव्रीडितादिभिः।
उपचारान्निषेवेते स संक्षिप्त इतीरितः ॥७१॥[5]

अत एव मानोऽपि न। नन्वे[63a]वं चेत्कथं बालिकानामिव तीरे वस्त्रं निक्षिप्य जलावगाहनं, कथं वा व्रतच्युतिभयं, कथं वा तेन व्रतच्युति-भयेन[6] शिरस्यञ्जलिबन्धः। तत्राह, पूर्वं सम्भवति देशाचारात्। यथा श्री[7] वै ष्ण व तो ष ण्यां

देशाचाराद्[8]

इति। मध्यमं[9] तु न भवत्येव परोढात्वाद्विशेषतः श्री रा धि का दीनां सूर्योपासिकात्वाच्च। अन्तिमं[10], सिचय[11]मादत्तेति सिचयग्रहणं, न व्रतच्युतिभयेन। अत एव कौतुकदर्शनार्थं व्रतोद्यापनदिवसे तासामागमनं

1 LM, IX. 35. For the full verse, see *ante*, III. 66.
2 LM, *loc. cit.*
3 LM, *loc. cit.*
4 D omits it.
5 UN, p. 511 with संक्षेप for संक्षिप्त.
6 BC omit this.
7 C omits it.
8 VT on BP, X. 22. 15 (=X. 22. 20) with देशाचारबाल्याचारप्राप्तत्वेना दोषाद् for देशाचाराद्.
9 व्रतच्युतिभयम्।
10 शिरस्यञ्जलिबन्धनम्।
11 वस्त्रम्। See *ante*, III. 66.

जातम्। श्री रा धि का यास्तत्रागमनं ज्ञात्वा श्री कृ ष्णा गमनं जातम्। अत एव वस्त्रहरणलीलाया मूलकारणं श्री रा धि कै व। ननु श्री[1] गो- स्वा मि चरणैरुक्तं श्री स्त व मा ला यां

रासलीलादिकारणम्[2]

इति। श्री द श मे तु

मयेमा रंस्यथ क्षपाः[3]

इति व्रतफलं सम्पादितम्। तत्र श्री स्वा मि पादैर्व्याख्यातमपि

इमा आगामिनी रात्रीर्मया सह रंस्यथ[4]

इति।

भगवानपि ता रात्रीः[5]

इत्यत्रापि तैर्व्याख्यातं

ता रात्रीः[6]

इति।

याताबला व्र जं सिद्धा मयेमा रंस्यथ क्षपा इति प्रतिश्रुता इत्यर्थः[7]

इति। अत एव श्री[8] रा धि का याः कन्यात्वं विना कथं रासलीलादि- कारणत्वं[9] सिध्यति। तत्राह। श्री ल लि त मा ध वे वासोहरणलीलायां श्री कृ ष्ण स्य श्री रा धि का किलकिञ्चितमाधुर्यैकाकृष्टचित्तत्वं दर्शितम्।[10] अतस्तया सह तस्य रासक्रीडाविशेषेच्छा जाता। सा च कालविशेषं विना न सम्पद्यत इति तदानुषङ्गिकतया तद्व्रतफलं सम्पाद्यमिति च ताः[11] प्रति तथा प्रतिज्ञा। अत एवादिकारणं न तु कारणमिति। अत एव

दृष्ट्वा कुमुद्वन्तमखण्डमण्डलं

र मा ननाभम्[12]

1 D omits it.
2 StM, p. 63 with रासक्रीडादि॰.
3 BP, X. 22. 27^b.
4 SD on BP, *loc. cit.*
5 BP, X. 29. 1.
6 SD on BP, X. 29. 1
7 SD on BP, *loc. cit.*
8 ABD omit it.
9 AB omit ॰त्व॰.
10 शिरसि कुरुत पाणिद्वन्द्वमादत्त मुग्धाः (LM, IX. 35) इत्यादि।
11 कन्याः।
12 BP, X. 29. 3^{a-b}.

इत्यत्र श्री वै ष्ण व तो ष ण्यां तथैव व्याख्यातम्। ननु पूर्वं यदि श्री कृ ष्णे न सम्भुक्ताः श्री रा धि का द्यास्तदा कथं

भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया[1]

इत्यादिकमुक्तम्। तत्राह। विदग्धशिरोमणित्वात्तासामुत्कण्ठावर्धनार्थं तेन[2] तथोक्तम्। तथा हि

वाचः पेशैर्विमोहयन्[3]

इति। समर्थाया उपपत्नीभावाभिमानात्मतया पत्नीभावाभिमानात्मतया [64a] यद्द्वैरूप्यं तस्य विमतस्य खण्डनेन धामलीलाद्वैरूप्यगम्यस्पष्टविमत-खण्डनमत्र जातम्। इति द्वितीयसोपाननिरसनम्॥

राधामाधवयोर्नौमि सम्भोगं तुर्यमद्भुतम्।
मोहनस्य परोद्रेकाद्रच्छन्कोटिं परामपि ॥७२॥
विरहस्य स्फूर्तिजत्वाद् व्रजे यो[4] वै न दर्शितः।
नववृन्दावने यस्तु केवलं समुदाहृतः ॥७३॥

## अथ तृतीयसोपाननिरसनम्।

ननु श्रीमदुज्ज्वलनीलमणौ

आद्या[5] प्रेमान्तिमान्तत्तानुरागान्तां समञ्जसा।
रतिर्भावान्तिमां सीमां समर्थैव प्रपद्यते ॥७४॥[6]

इति नियमः। मोदनः[8] खलु प्रायो[9] महाभावस्य परकाष्ठारूपः। श्री ल लि त मा ध वे न व वृ न्दा व न विहारे तस्योदाहरणं दत्तम्। यथा

1 BP, X. 29. 24$^{a-b}$.
2 कृष्णेन।
3 BP, X. 29. 17$^{d}$.
4 तुर्यसम्भोगः।
5 साधारणी।
6 UN, p. 505. See *ante*, I. 42.
7 BC मोहनः.
8 B omits it.

आतन्वन्कलकण्ठनादमतुलस्तम्भश्रियोज्जृम्भितो
भूयिष्ठोच्छलदङ्कुरः फलितवान्स्वेदाम्बुमुक्ताफलैः ।
उद्यद्बाष्पमरन्दभागविचलोऽप्युत्कम्पवान्विभ्रमैः
राधामाधवयोर्विराजति चिरादुल्लासकल्पद्रुमः ॥७५॥[1]

5 तत्र श्रीकृष्णस्यापि पूर्णतमत्वं दर्शितम् । यथा

अपरिकलित[2]पूर्वः कश्चमत्कारकारी
स्फुरति[3]

इत्यादि । अत एव द्वारकायां [64b] परोढात्वादिनिमित्तादर्शनात्तदादि-
निमित्ताभावेन पत्नीभावाभिमानापातात्पत्नीभावाभिमानात्मतयापि समर्था
10 स्यादित्यायातमिति चेत्तत्राह । श्रीव्रजगतानां समर्थानिमित्तानामुप-
पतित्वादीनां स्फूर्तेर्नववृन्दावनेऽपि[4] सद्भावेन तत्र[5] गतायाः
श्रीराधा[6]या आत्मनः परोढात्वमननात्तत्र[7] रतिः समर्थैवोक्तलक्षणा
न्याय्या । श्रीकृष्णस्यापि पूर्णतमत्वं न्याय्यम् । द्वारकायां निर्णीतस्य
पूर्णत्वस्य पतित्वोपपतित्वाभ्यां नायकषण्णवतिभेदोपपत्तेः । पूर्णतमत्वं
15 समृद्धिमतः प्रौढत्वात् । पूर्णतमत्वसिद्धिर्विरोधखण्डने प्रकाश्या । परिणयो-
द्यमे[8] सति योगमायाया[9] द्वितीयवृत्तिवैभवप्रकाशात्परोढात्वाभिमान-
सङ्कोचः । अत एव समर्थारतेः सङ्कोचः । यथा श्रीललितमाधवे

श्वश्रूस्तु गोष्ठेश्वरी[10]

इति । अत एव समञ्जसाया मूलत्वेनारोचकतयोद्वाहः श्रीगोस्वामि-
20 चरणैर्न वर्णितः । तथापि राधायाः[11] समर्थायामुपादेयत्वमननं न तु
समञ्जसायाम् । [65a] यथा[12]

---

1 LM, VIII. 7 with ॰च्छलिताङ्कुरः in *b*.
2 ABD अनवकलित॰.
3 LM, VIII. 32. C omits स्फुरति.
4 A omits ॰ऽपि.
5 नववृन्दावने ।
6 C ॰राधिका॰.
7 नववृन्दावने ।
8 द्वारकायाम् ।
9 C omits ॰या.
10 LM, X. 34.
11 ABD तस्याः.
12 ABD add here सत्यभामयोक्त which is not supported by LM referred to in the next note.

चिरादाशामात्रं त्वयि विरचयन्तः स्थिरधियो
विदध्युर्मे वासं मधुरिमगभीरे म धु पु रे ।
दधानः कैशोरे वयसि सखितां गो कु ल प ते
प्रपद्येथास्तेषां परिचयमवश्यं नयनयोः ॥७६॥[1]

5 किञ्च

या ते लीलापदपरिमलोद्गारिवन्यापरीता
धन्या क्षौणी विलसति वृता मा थु रो माधुरीभिः ।
तत्रास्माभिश्चटुलपशुपीभावमुग्धान्तराभिः
संवीतस्त्वं कलय रदनोल्लासिवेणुर्विहारम् ॥७७॥[2]

10 कृ ष्णः । प्रिये तथास्तु ।[3]

**व्याख्या[4] । चटुला याः पशुप्यः पशुपैर्व्यूढा[5]स्तासां भावः समर्था[6]रतिस्तया मुग्धं मोहितमन्तरं यासां ताभिः । तथास्तु' पद्यद्वये यथा प्रार्थितं तथास्त्विति । अत एव स्पष्टलीलानुसारेण श्री रा धि का दिभिः सह व्र जा गमनेन समर्थारतिविषयत्वेनैव श्री कृ ष्ण स्य समृद्धिमान्सम्भोगो**
**15 जातः । अन्यथा वरस्यासिद्धत्वपरमदोषापत्तेः ।**

**मतान्तरं समुत्थाप्य तेनैव तद्वि[65b]खण्डनम् ।**
**मतं निरसने[7] ज्ञेयं द्वितीय एव केवलम् ॥७८॥**

**अत्राप्युपपत्नीभावाभिमानात्मतया पत्नीभावाभिमानात्मतया समर्थाया यद्द्वै-रूप्यं तस्य विमतस्य खण्डनेन धामलीलाद्वैरूप्यरूपगम्यस्पष्टविमतखण्डनं**
**20 जातम् । इति तृतीयसोपाननिरसनं पूर्णम्[8] ॥**

---

1 LM, X. 35.
2 LM, X. 36 with वदनो॰ in *d*.
3 LM, X. 37.
4 C omits this.
5 C ॰पैरूढा॰.
6 D ॰मर्थ॰.
7 मथुरागमननिरसने ।
8 B सम्पूर्णम् ।

नमः श्रीव्रजदेवीभ्यो यासां भावामृताम्बुधिः ।
तरङ्गैः कृष्णमाप्लाव्य कृष्णपत्नीरपूर्णयत् ॥७९॥

## अथ चतुर्थसोपाननिरसनम् ।

न च वृन्दावनस्थप्रकाशान्तरादिसदृशेन प्रकाशान्तरेण कुरुक्षेत्रगतानां श्रीराधिकादीनां समर्थ[1]रतिमत्त्वेन महाभावोदयः । यथा श्री[2]दशमे

गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं
यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्ति ।
दृग्भिर्हृदीकृतमलं परिरभ्य सर्वा-
स्तद्भावमापुरपि नित्ययुजां दुरापम् ॥८०॥[3]

ननु

यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बा[66a]निलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥८१॥[4]

इत्यस्य श्रीमहाप्रभुणास्वादितपूर्वस्य सामान्यपद्यस्य योऽर्थस्तस्य सादृश्यानुभवात् कुरुक्षेत्र[5]गतायाः श्रीराधिकायाः परोढात्वाभिमानाभावोऽनुमेयः स्यात् । तेन तदभिमानाभावेन पत्नीभावाभिमानापातात्पत्नीभावाभिमानात्मतयापि समर्था स्यादित्यनुमेयं स्यादिति चेत्तत्राह ।

---

1 C °मर्था°.

2 C inserts here °मद्°.

3 BP, X. 82. 39.

4 Quoted in *Kāvyaprakāśa*, I. 4. Cited in PA, 382. B omits एव हि वर° समुत्कण्ठते.

5 ABD °क्षेत्रे.

अस्मिन्नपि[1] पद्ये नायिकायाः परोढात्वमेव। रेवा रोधसि वेतसीतरुतल इत्यस्य निमित्तं परोढात्वम्। तथा हि व्याख्या। यः कौमारहर[2] इति। कौमारं प्रथमं वयः कैशोरमित्यर्थः। यथा[3] दानकेलिकौमुद्यां

वृन्दा। कन्दर्पमपि कामं तवात्र च दुरापं
चतुरतरकर्मा कुमार ललितासी[4]

5 इत्यत्र हे कुमार हे व्रजकिशोरेति। तथा[5] स्तवमालायां

जय जय वल्लवराजकुमा [66b] र[6]

इति। कौमारेण हरत्याकर्षति पातिव्रत्यादिति[7] कौमारहरः। कीदृग्वरो देवाहूतः। तथा हि

तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः

10 इति निरुक्तेः। श्रीसूर्योपासनादिभिर्वाञ्छितत्वादन्यप्यूढात्वेऽपि प्राप्ताङ्गसङ्गः स एव न तु मनाक्शिथिलकैशोरादिमाधुरीकः। यद्वा वरोऽत्र एव श्रेष्ठ इति विधेयस्य विशेषणम्। अथवेदं पद्यं न सामान्यं किन्तु कुरुक्षेत्रगतयोः श्रीराधा[8]कृष्णयोर्मिलनप्रतिपादनमयम्। अत एव श्रीगोस्वामिपादैः श्रीकृष्णलीलावर्णनात्मिकायां[9] पद्यावल्यामुत्थाप्य

15 कृष्णा रोधसि वेतसीतरुतले[10]

इति पाठः प्रकटितः। रेवेति कृष्णा या[11] एकं नामेति गम्यते। अत एव निरुक्तिविशेषो गम्यः। अन्योऽर्थः पूर्ववदेव। अत एवास्य पद्यस्यार्थरूपं श्रीगोस्वामिचरण[12]कृतं पद्यम्। यथा

---

1 BD ह्यस्मिन्.
2 B omits °हर°.
3 C inserts here श्री°.
4 DKK, 146.
5 C inserts here श्री°.
6 StM, p. 280.
7 C बलादिति°.
8 ABC श्रीराधिका°.
9 C inserts here श्री°.
10 See PA, 382, foot note, 5.
11 यमुनायाः।
12 B °चरणैः.

प्रियः सोऽयं कृष्णः सहचरि कुरुक्षेत्र मि[67a]लित-
स्तथाहं सा राधा तदिदमुभयोः सङ्गमसुखम् ।
तथाप्यन्तःखेलन्मधुरमुरलीपञ्चमजुषे
मनो मे कालिन्दी पुलिनविपिनाय स्पृहयति ॥८२॥[1]

5 अत्र प्रकट एव परोढात्वाभिमानः । तं विना मूलनामग्रहणं न स्यात् । सोऽयं साहमित्यनेन समर्थाया[2] रतेस्तन्निमित्त[3]सद्भावो दर्शितः । अत एव परोढात्वाभिमानादिकं स्फुटमायातम् । किन्तु वृन्दावन मुरली-पञ्चमादेरभावादत्र समर्थाया गौणत्वम् । अत्रापि समर्थाया उपपत्नीभावा-भिमानात्मतया पत्नीभावाभिमानात्मतया यद्द्वैरूप्यं तस्य विमतस्य खण्डनेन
10 धामलीलाद्वैरूप्यरूपगम्यस्पष्टविमतखण्डनं जातम् । इति चतुर्थसोपान-निरसनं पूर्णम् ॥

नमोऽस्तु स्पष्टलीलायै कृष्णो यदनुसारतः ।
श्री व्र जं पुनरागत्य व्र ज लोकाननन्दयत् ॥८३॥

## अथ पञ्चमसोपाननिरसनम् ।

15 श्री ल लि त मा ध वे

कृष्णः । प्रिये भूयः किन्ते प्रियं करवाणि ।[4]

राधि[का] । स्मितं कृत्वा । बहिरङ्गजनालक्ष्य[67b]तया श्री गो कु ल मपि तदीयस्वस्व[5]रूपै[6]रलङ्करवामेति ।[7]

राधि[का] स्मितं कृत्वेत्यत्र स्मितं भ[8]वदिच्छया । यो ग मा य या बहिरङ्ग-

---

1 PA, 383, p. 176. See *ante*, II. 34.

2 C समर्थ्यो॰.

3 C adds स्य after it.

4 C drops कृष्णः॰ करवाणि.

5 C omits ॰स्व॰.

6 व्रजसम्बन्धिभिः समर्थरतिमत्तादिविशिष्ट-स्वस्वरूपैरिति.

7 LM, X. 37 omitting तदीय॰ before ॰स्वस्व॰.

8 BC insert here ॰ग॰.

जनप्रतारणाय व्र ज लीला द्वा र का लीलयोरेकत्वं प्रत्यायितमित्यभिप्रायं बहिरङ्गजनालक्ष्यतयेति। अत्र द्वा र का यां भवता सह मदावेशस्थानस्य स त्य भा मा रूयस्य त्वदीयरूपविशेषस्य परिणयेन बहिरङ्गजनप्रतारणं जातम्। अधुना तै र्न न्द न न्द नो पासकेतरै[1]रलक्ष्यतयेत्यर्थः। न न्द-
5 न न्द नो पासकैस्तटस्थायमानैर्लक्ष्यतया। अन्यथा न न्द न न्द ने व सु- दे व न न्द न त्वानुभववत्त[2]त्तत्परिकराणां[3] व्र जा गतानां स्वकीयात्वाद्यनु- भवः स्यात्। तदनुभवे तन्निमित्तापेक्षा। तत्तु श्री व्र जे न्द्र गेहस्थित्यादि- रूपम्। तस्मिन्सति

चटुलपशुपी[4]

10 इत्यादिप्रार्थनाया[5] असिद्धिः। गो लो क[6] ना थो पासकानां रसनिर्यास- स्वाद[7]रूपावतारप्रयोजनमननाद्विरोधाभावः। श्री गो [68a] कु ल मपि तदीयस्वस्वरूपैरलङ्करवामेत्यत्रेदं[8] गम्यम्। श्री रा धि का दीनां पट्टमहिषी- रूपैरावेशस्थानैस्तत्तल्लीलोचित व सु दे व न न्द न रूपेण श्री कृ ष्णे न सह द्वा र का यां स्थितिः। महिषीष्वावेशकारिणीभिः समर्थरतिभि-
15 र्व्र ज दे वी रूपैः सद्भि र्व सु दे व न न्द न आवेशकारिणा यो ग मा या- द्वितीयवृतयप्रासपरिचर्यपादपद्मे न[9] श्री न न्द न न्द ने न सह श्री व्र जे- श्व र व्र जे श्व री पौ र्ण मा स्या दिभिर्वर्णिततया श्रीव्रजागमनं। यो ग- मा या वैभवेन व सु दे वा दीनां तदनुसन्धानम्। यदा श्री व्र जे श्व रं-

1 C ०पासकै०.

2 C omits ०त्त०.

3 नन्दनन्दनवसुदेवनन्दन[परिकराणाम्]।

4 LM, X. 36. See for the full verse *ante*, III. 77.

5 AB ०प्राप्ताह्याया.

6 ननु भवतु चटुलपशुपील्यादिप्रार्थनाया असिद्धिरिति। तेन किं गोलोकशत- प्रियाणां शक्तित्वाच्छक्तिमतः श्रीकृष्णस्य परमेश्वरत्वात्सदा स्वीयात्वमननमेव तदु- पासकानां युक्तत्वादिति चेत्तत्र गोलोक- नाथोपासकानामपि प्रकटलीलानुसारेण रसनिर्यासास्वादकत्वेन चटुलपशुपीला- दिकं प्रयोजनम्। अस्माकन्तु सुतरां प्रकटाप्रकटे चटुलपशुपील्यादिप्रयोजनं नन्दनन्दनस्य नराकृतिमाधुर्यास्वादन- ञ्चेत्याह गोलोकेत्यादि।

7 ABC omit ०स्वाद०.

8 वक्ष्यमाणम्।

9 प्रथमवृत्तिसेवितपादपद्मे न।

व्रजेश्वरीपौर्णमास्याद्याः श्रीकृष्णराधिकाद्याश्च व्रजमागता-
स्तदा श्रीव्रजस्थे स्वे स्वेऽतिरहस्यरूपे बहिरङ्गजनालक्ष्ये स्थूलप्रकाशे
प्रविष्टास्तदा योगमायया च निजवैभवविशेषः प्रकाशितः। सर्वेषां[1]
द्वारकागमनादिकं स्वप्नवज्ज्ञातम्। श्रीनन्दादीनां व्रजागमनं
5 साधारणजनान्प्रति योगमायया नाच्छादितम्। [68b] श्रीकृष्णा-
दीनान्तु तद्व्रजागमनं तया तान्[2] प्रत्याच्छादितमिति ज्ञेयम्। अत
एव परोढात्वादिनिमित्तोद्भावितसमर्था[3]रतिमयसमृद्धिमत्सम्भोगोदयेन[4]
राधां प्रति -

तथास्तु[5]

10 इति श्रीकृष्णपुनर्दत्तवरस्य सिद्धिर्जाता। अ[6]त्रापि समर्थाया द्वारकातो
राधिकादीनां व्रजागमनेन पत्नीभावाभिमानोदयात्[7] पत्नीभावाभि-
मानात्मतयोपपत्नीभावाभिमानात्मतया यद्द्वैरूप्यं तस्य विमतस्य खण्डनेन
धामलीलाद्वैरूप्यरूपगम्यस्पष्टविमतखण्डनं जातम्।
यमलार्जुनयोर्यद्वद्वयोर्दैत्येन्द्रयोः यथा

15 पूर्वभावो विलीनोऽपि पुनरुद्बुद्धतां गतः।
रुक्मिणीप्रमुखास्वेवं समर्था पुनरुद्गता ॥८४॥
तौ तौ यथा पूर्वभावं प्राप्य स्व[8]स्थानमागतौ।
एवं समर्थामासाद्य भैष्माद्या[9] व्रजमागताः ॥८५॥[10]

इदं ललितमाधवगतं पञ्चमसोपाननिरसनम्। श्रीभागवतगतन्तु

1 नन्दादीनाम्।
2 बहिरङ्गजनान्।
3 AC ॰मर्थ॰.
4 D ॰म्भोगेन.
5 LM, X. 37.
6 C त॰.
7 C omits it.
8 ACD सं॰.
9 रुक्मिण्याद्याः।
10 C drops यमलार्जुनयो॰ भैष्माद्या व्रज-
मागताः.

तद्द्वितीय[1]निरसनप्रान्ते दर्शितम् ।[2] श्री व्र जे न्द्र न न्द न स्य यथा श्री व सु दे व न [69a] न्द नः प्रकाशस्तथा श्री रा धि का दीनां स त्य-भा मा द्याः प्रकाशरूपाः । यथा स्पष्टलीलानुसारेण श्री न न्द न न्द न स्य म थु रा दिगमनं तथा स्पष्टलीलानुसारेण श्री रा धि का दीनां द्वा र का-
5 दिगमनम् । यथा तस्य पुन र्द्वा र का तः श्री व्र जा गमनं तथा तासामिति । श्री कृ ष्ण स्यैव तासां महिमाचिन्त्यताज्ञापन[3]रूपः श्री ल लि त मा ध व प्रयोजनविशेष इति । किञ्च श्री वि द ग्ध मा ध व-गता याः पौ र्ण मा स्या द्यास्तासां प्रकाशरूपा ल लि त मा ध व गता यो ग मा या द्वितीयवृत्तिसेवितास्ता ज्ञेयाः । ल लि त मा ध वे परिणय-
10 पर्ववेदीसन्निहित स त्य भा मा[4] रु क्मि ण्या द्यास्तु समञ्जसाश्रया यो ग मा या द्वितीयवृत्तिसेवित रा धा च न्द्रा व ल्या द्यावि[5]ष्टस्व[6]रूपाः । समर्थानिमित्तरूपाणां परोढात्वादीनां वास्तवत्वेऽप्यवास्तवत्वमननात्तासां[7] समञ्जसाविषयस्य श्री व सु दे व न न्द न स्यापि

ये यथा मां प्रपद्यन्ते[8]

15 इति प्रतिज्ञादत्तावसर यो [69b] ग मा या. द्वितीयवृत्तिसाक्षात्[9]सेवित-पादपद्मत्वं[10] । श्री न न्द न न्द ना वि[11]ष्टस्वरूपत्वात् । श्री व्र जे तु श्री न न्द न न्द न श्री रा धा च न्द्रा व ल्या द्या यो ग मा या द्वितीयवृत्त्य-प्राप्य[12]साक्षात्परिचर्यपादपद्माः । इति सोपानपञ्चकनिरसनं तृतीयं पूर्णम् ॥

---

1 C तदीय॰.

2 कालिन्द्याः पुलिने रम्ये (PP, VI. 279. 25) इत्यादिना' मासद्वयमुवास ह (PP, VI. 279. 26) इत्यत्र तदन्ते एकराले महाकल्पत्वप्राप्तिरित्यादिना व्रजजनालक्ष्यतया वसुदेवनन्दनरूपेण पुनर्द्वारकागमनं यद्रहस्यं तदेव स्पष्टं भण्यते। See *ante*, III. 52-53 *et. seq.*

3 AD ॰ज्ञान॰.

4 MSS. here add ॰द्यास्तु which does not suit well.

5 C inserts here ॰शि॰.

6 C omits ॰स्व॰.

7 रुक्मिण्याद्यैनाम् ।

8 BG, IV. 14.

9 B omits ॰साक्षात्॰.

10 श्रीवसुदेवनन्दनत्वम् ।

11 C inserts here ॰शि॰.

12 A ॰त्यप्राप्तः॰.

जयन्ति कृष्णजन्मादिलीला एकरसाः सदा ।
प्रपञ्चागोचरत्वे या उक्ता अप्रकटा इति ॥८६॥

## अथाप्रकटलीलागतस्वकीयात्ववादनिरसनम् ।

जारबुद्ध्यापि सङ्गताः[1]

5 इति जारबुद्ध्या सहेति व्याख्यां कुर्वद्भिः श्रीमत्सनातनगोस्वामिचरणैः श्री[2] वैष्णवतोषण्यामप्रकटप्रकट[3]लीलायामौपपत्यं प्रकाशितम् ।[4] तथा

गोपीनां तत्पतीनाञ्च सर्वेषामेव[5] देहिनाम् ।
योऽन्तश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक् ॥८७॥[6]

10 इत्यत्र

यद्वा गोप्यादीनां तथा[7] सर्वेषामपि वृन्दावनवासिनां देहिनां योऽन्तर्मध्ये चरति तादृशक्रीडाभिर्नित्यमेव क्रीडति स श्री[8] कृष्णो [70a]ऽध्यक्षः प्रत्यक्षः प्रापञ्चिकानां सन्नपि चरति तथैव क्रीडति[9]

इति व्याख्यां कुर्वद्भिः पुनस्तैरेव तस्यामेव[10] तस्यां[11] तदेव[12] समर्थितम् ।

---

1 BP, X. 29. 11[b].
2 C adds ॰मद्॰.
3 C omits ॰प्रकट॰.
4 *Cf.* VT on BP., X. 29. 11 (=X. 29. 10).
5 ABD ॰षाञ्चैव.
6 BP, X. 33. 35; B omits सर्वेषामेव॰ देहभाक्.
7 C omits it.
8 C omits it.
9 VT on BP, X. 33. 35 with अथवा for यद्वा, गोपगणादीनां for वृन्दावनवासिनां adding च after देहिनां, तन्मध्ययोग्य॰ for तादृश॰, with प्रकटं before सन्नपि, तत्तद्योग्यमेव for तथैव.
10 तोषण्याम् ।
11 अप्रकटप्रकटलीलायाम् ।
12 औपपत्यमेव ।

अत्र गोप्यादीनामित्यादिशब्दात्तत्पतीनाञ्चेति। किञ्च यथोपपतित्वावस्थो नायको पतित्वावस्थो न स्यात्किन्तूपपतित्वत्यागेनैव । यथा परकीयात्वावस्था नायिका स्वकीयात्वा[1]वस्था न स्यात्किन्तु परकीयात्वत्यागेनैव । एवं समर्थात्वावस्था रतिः पत्नीभावाभिमानात्म[2]समञ्जसात्वावस्था
5 न स्यात्किन्तु समर्थात्वत्यागेनैव । समर्थायामुपपतेर्विषयत्वात्परकीयाया आश्रयत्वाच्च। तत्तदन्यथात्वे तस्या अन्यथात्वं न्याय्यम्। समर्थात्वत्यागे सति कौस्तुभमणिवदनन्यलभ्यत्वहानेश्चिन्तामणिवदभितः सुदुर्लभत्वापातः।[3] सम्भोगेच्छाया रत्या[4] सह तादात्म्यापन्नत्वस्य रतेः सान्द्रतमत्वस्य सर्वविस्मारिगन्धत्वस्य स्वरूपजातत्वस्य च हाने रते[5]र्भावान्तरस्पर्शित्वस्य
10 सान्द्रत्वस्यान्तरान्तरैश्वर्यानुसन्धानस्य च संस्कारोत[70b]पन्नत्वेन गुणादिश्रवणापेक्षायाश्चापातश्च। उत्तरः पूर्वस्य हेतुः[6]। तेन

आद्या प्रेमान्तिमां तत्रानुरागान्तां समञ्जसा।
रतिर्भावान्तिमां सीमां समर्थेति प्रपद्यते ॥८८॥[7]

इयमेव रतिः प्रौढा महाभावदशां व्रजेद्[8]

15 इति निर्धार[9]तो महाभावोत्पादनयोग्यताहाने[10]र्महाभावस्य तद्वृत्तिगुणस्य च तिरोधानादनुरागपर्यन्तोत्पादनयोग्यतापाता[11]दनुरागाविर्भावः। तेन

महाभावस्वरूपेयम्[12]

इति ।

---

1 AB omit °त्वा°, D स्वीयात्वा°.
2 C °त्मा.
3 *Cf.* UN, p. 407 :
साधारणी निगदिता समञ्जसासौ
समर्था च ।
कुब्जादिषु महिषीषु च गोकुल-
देवीषु च क्रमतः ॥
मणिवच्चिन्तामणिवत्कौस्तुभमणि-
वत्त्रिधाभिमता ।
नातिसुलभेयमभितः सुदुर्लभा
स्यादनन्यलभ्या च ॥
4 समर्थया ।
5 समञ्जसायाः ।
6 स्यात् ।
7 UN, p. 505 with समुर्थेव in *d*.
8 UN, p. 415.
9 C adds here °य°.
10 समञ्जसायाः ।
11 A योग्यत्वा°.
12 UN, p. 73.

महाभावोज्ज्वलचिन्तारत्नोद्भावितविग्रहाम्[1]

इति श्री रा धि का या[2] महाभावस्वरूपत्वहानिः। एवमन्यासामपि यथोचितमहाभावस्वरूपत्वहानिश्च। अत एव श्री व्र ज सु न्द री णां महिषीसादृश्यापातेन परमोत्कर्षहानिः। श्री व्र ज सु न्द री णां परमोत्कर्षे महाभावविलासस्व[3]रूपरासस्य हेतुत्वम्। यथा[4]

5 नायं श्रियोऽङ्ग[5]

इत्यादि। तया[6] श्री न न्द न न्द न स्यापि पूर्णतमत्वहानिः पूर्णत्वापातात्। अत एव व्र ज स्यापि द्वा र का सादृश्यापातेन परमोत्कर्षहानिश्चेति ततो रा[71a]गानुगाभजनस्यासिद्धिरप्रयोजकत्वञ्चेति। एवं महाभावावकरादीनां षोडशानामवकराणामापातः स्यात्परस्परसापेक्षत्वात्।
10 तस्मादौपपत्यं परकीयत्वञ्च नित्यं समर्था रतिश्च नित्या।

यो यस्य विषयो नित्यं नियतः शास्त्रलोकयोः।
स भावस्तदसत्तायां कथं सत्त्वमवाप्नुयात् ॥८९॥
आधारो नियतो यस्य भावस्य यः सदा भवेत्।
तस्याधारस्य सत्त्वे स भावः सत्त्वमवाप्नुयात् ॥९०॥[7]
15 ईश्वरो नैव जीवः स्यात्सत्त्वं नैव रजः क्वचित्।
चिच्छक्तिर्नैव मायैवं न समर्था समञ्जसा ॥९१॥

किञ्च

रतिः स्थितानुकार्येषु लौकिकत्वादिहेतुभिः।
रसः स्यान्नेति नाट्यज्ञा यदाहुर्युक्तमेव तत् ॥९२॥[8]

---

1. SA, p. 397.
2. C ०राधिका०.
3. AB omit ०स्व०.
4. D omits it.
5. BP, X. 47. 60ᵃ.
6. पूर्वोक्तया हान्या।
7. B omits the verse आधारो नियतो० मवाप्नुयात्.
8. BRS(K), p. 50.

अत्रादिशब्देन पारिमित्यादि[1]। अत एव समर्थाया अप्रकटलीलायां समञ्जसात्वे पारिमित्यात्[2] समर्थास्थायिकस्य शृङ्गारस्य रसत्वं न स्यात्। अत एव समञ्जसास्थायिकस्याप्रकटलीलागतशृङ्गारस्यापि रसत्वं न स्यात्। अत एव समर्थाया नित्यत्वेन[3] तन्निमित्तानामौपपत्यादीनां सुनिर्णीतत्व-
5 मेव नित्यत्वस्य। किञ्च

यथोत्तरमसौ स्वादविशेषोल्ला[71b]समय्यपि।
रतिर्वासनया स्वाद्वी भासते कापि कस्यचिद् ॥६३॥[4]

इति। सर्वास्वादवलित[5]तयासमोर्ध्वत्वेन शृङ्गारस्य रसराजत्वम्। अन्येषां रसानां तदनुगतत्वम्। यथा

10 मुख्यरसेषु पुरा यः सङ्क्षेपेणोदितो रहस्यत्वात्।
पृथगेव भक्तिरसराट् स विस्तरेणोच्यते मधुरः ॥६४॥[6]

इति। यथा राज्ञां मुख्यत्वगौणत्वाभ्यां तदनुगानां मुख्यत्वगौणत्वे स्यातां। तथा समर्थादिरतिभेदस्थायिभेदानां शृङ्गाररसभेदानां मुख्यत्वगौणत्वाभ्यामन्ये[7]षां तदनुगानां श्री व्र जा दिगतानां प्रीतशदिरसभेदानां मुख्यत्व-
15 गौणत्वे स्याताम्। यथा

अत्रापि बल्लवाधीशनन्दनालम्बना रतिः।
सान्द्रानन्दचमत्कारपरमावधिरिष्यते ॥६५॥
यत्सुखौघलवागस्त्यः पिबत्येव स्व[8]तेजसा।
र मे श माधुरीसाक्षात्कारानन्दाब्धिमप्यलम् ॥६६॥[9]

---

1 B पारिमित्येत्यादि.

2 CD पारिशिष्यात.

3 प्रकटाप्रकटे।

4 BRS(K), p. 45. BD स्वादु for स्वाद॰ in *a*.

5 C omits ॰त॰.

6 UN, p. 4. All MSS. मुख्येषु रसेषु for मुख्यरसेषु. But such reading affects metre.

7 C ॰गौणत्वेऽन्ये॰

8 BD स॰.

9 BRS(K), p. 50 with तत्रापि for अत्रापि in *a*.

इति। अत एवाप्रकटलीलायां समर्थाया अन्यथात्वे व्र जे श्व र प्रभृति-भावान्यथात्वेन तेषां[1] व सु दे वा दित्वाप्त्यापत्तिरिति। शृङ्गारस्य रसराजत्वेऽपि शान्तवत्सलयो[72a]स्तदनुगत[2]त्वेऽपि यत्परस्परवैरित्वं तन्मधुरादि-रतीनां वैलक्षण्यमूलाचिन्त्यस्वरूपत्वात्। तद्यथा

5 महाशक्तिविलासात्मा भावोऽचिन्त्यस्वरूपभाक्।
रत्याख्य इत्ययं युक्तो न हि तर्केण बाधितुम् ॥९७॥[3]

अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेद्

इति। किञ्च

वामता दुर्लभत्वञ्च स्त्रीणां या च निवारणा।
10 तदेव पञ्चबाणस्य मन्ये परममायुधम् ॥९८॥[4]

इति[5]। अस्यार्थः। आयुधस्य यत्परमत्वं तस्य कारणं वामतादि[6]त्रयम्। वामतादि[7]त्रयस्य कारणं परकीयात्वम्। परकीयत्वाभावे तत्त्रयाभावः। तत्त्रयाभाव आयुधस्य परमत्वाभावः।

यत्र निषेधविशेषः सुदुर्लभत्वञ्च यन्मृगाक्षीणाम्।
15 तत्रैव नागराणां निर्भरमासज्यते हृदयम् ॥९९॥[8]

अस्यार्थः। आसङ्गस्य निर्भरत्वे मृगाक्षीणां निषेधविशेषसुदुर्लभत्वे कारणे। तयोः कारणं परकीयात्वम्। परकीयात्वाभावे तयोरभावः। तयोरभाव आसङ्गस्य निर्भरत्वाभावः।

बहु वार्यते यतः खलु यत्र प्रच्छन्नकामुकत्वञ्च।
20 या च मिथो दुर्लभता सा परमा [72b] मन्मथस्य रतिः ॥१००॥[9]

---

1 व्रजेश्वरप्रभृतीनामीश्वरत्वेन।
2 A ॰गुण॰. B leaves a gap omitting ॰स्तदनुग॰.
3 BRS(K), p. 49.
4 Cited in UN, p 54 as ascribed to R u d r a.
5 C omits it.
6 C वामादि॰.
7 C वामादि॰.
8 Cited in UN, p. 54 as from *Viṣṇuguptasaṃhitā*.
9 Cited in UN, p. 14 as attributed to M u n i, i. e., B h a r a t a m u n i.

अस्यार्थः। मन्मथरतेः परमत्वस्य कारणानि बहुवारणप्रच्छन्नकामुकत्व-मिथोदुर्लभत्वानि। तेषां कारणं परकीयात्वम्। परकीयात्वाभावे तेषामभावः। तेषामभावे मन्मथरतेः परमत्वाभाव इति। अत एवाप्रकट-लीलायां परकीयात्वाभावे तत्तदुत्कर्षाभावः स्यात्। परकीयात्वस्य तत्त-

5 त्कारणत्वे[1] परकीयाणामसमञ्जसरत्याश्रयत्वात्। किञ्च[2]। स्थानभेदे नायकभेदनायिकाभेदनियमस्तथा नायिकाभेदे रतिभेदनियमस्तत्त[3]न्नित्य-त्वञ्च श्रीमदुज्ज्वलनीलमणौ श्रीभक्ति[4]रसामृतसिन्धौ[5] च प्रकटं विराजते। तत्र रतिभेदस्याप्रकटलीलागतत्वेन नित्यता। यथा

विराजन्तीमभिव्यक्तं व्रजवासिजनादिषु[6]

10 इत्यत्र विराजन्तीमिति वर्तमानप्रयोगः। तथा

इयन्तु व्रजदेवीषु सुप्रसिद्धा विराजते[7]

इत्यत्र विराजत[8] इति वर्तमानप्रयोगश्च। तथा

रागात्मिकैकनिष्ठा ये व्रजवासिजनादयः।

तेषां भावाप्तये लुब्धो भवेदत्राधिकारवान् ॥१०१॥[9]

15 इत्यत्र रागात्मिकायाः प्राप्यत्वञ्च रागात्मिकायास्त[73a]द्भेद[10]कामात्मि-कायाश्च नित्यतां वक्ति। अत एव साधूक्तं श्री[11]दुर्गमसङ्गमन्याम्

अखिलरसामृतमूर्तिः[12]

इत्यादिपद्यस्य व्याख्यायाम्

---

1 वामतादि-[कारणत्वे].

2 C omits it.

3 तेषां तेषां स्थानादीनाम्।

4 AD omit ०भक्ति०.

5 *Cf.* BRS(K), p. 43:
वैशिष्ट्यं पात्रवैशिष्ट्याद्रतिरेषोपगच्छति।
यथार्कः प्रतिबिम्बात्मा स्फटिकादिषु वस्तुषु॥
See *ante*, p. 20, line 6 of our text where occurs the first part of this verse, but there reference to its source has been omitted.

6 BRS(K), p. 9. B omits व्रज-वासिजनादिषु.

7 BRS(K), p. 10.

8 ABD omit it.

9 BRS(K), p. 10.

10 C omits प्राप्यत्वञ्च० स्तद्भेद०.

11 C omits it.

12 BRS, p. 1; BRS(K), p. 1.

अत एव प्राकट्यसमयमात्रदृष्ट्या या लौकिकस्याप्रतीतिस्तस्या निरासकोऽयं वर्तमान-प्रयोगश्च ।[1]

अत्र[2] प्रमाणं

जयति जननिवासो देवकीजन्मवादः[3]

5 इत्यादि । तत्र

स्वैर्दोर्भिरस्यन्नधर्मम्[4]

इत्यत्र वर्तमानप्रयोगेण जातप्राकट्यासुरवधलीलाया नित्यतया लीला-द्वैविध्यं निरस्तम् । तत्साहचर्यादन्यासां[5] जातप्राकट्यानां लीलानां नित्य-ताया उदाहरणादजातप्राकट्या काप्यन्या लीला नास्तीत्यायातमित्यतः

10 परेणान्वयः । द्वैविध्यं निरस्तम्[6] । एवम्

अहो अलं श्लाघ्यतमम्[7]

इत्यादि । स्कान्दे तथा

वत्सैर्वत्सतरीभिश्च[8]

इत्यादिपद्ये च जातप्राकट्यानां जन्मादिलीलानां नित्यतोदाहरणाल्लीलाद्वैविध्यं

15 निरस्तम् । एतदतिगूढविमतखण्डनं जातं स्पष्टविमतखण्डनान्तर्भूतमानु-षङ्गिकम् । पुनर्व्याख्यामनुसरामि ।

अथ तत्[9]दुत्कर्षहेतुं स्वरूपलक्षणमाह । अ[73b]खिलरसा वक्ष्यमाणाः शान्ताद्या द्वादश यस्मिंस्तादृशममृतं परानन्दो मूर्तिर्यस्य सः[10]

इति । अत एव[11] वक्ष्यमाणशृङ्गाररसस्य मूर्तित्ववर्तमानत्वाभ्यां नित्य-

---

1 DS on BRS, p. 2 with लोकस्या० for लौकिकस्या०.

2 ABC तत्र.

3 BP, X. 90. 48ᵃ.

4 BP, X. 90. 48ᵇ.

5 रासदानादिलीलानाम् ।

6 C omits ०इत्यतः परेणा० निरस्तम्.

7 BP, I. 10. 26ᵃ. The rest of the line is: यदोः कुलम्.

8 Cited in LBA, p. 155 where it is attributed to *Skānda, Mathurākāṇḍa*. The rest of the line is साकं क्रीडति माधवः.

9 औपपत्यपरकीयात्वयोः ।

10 DS on BRS, p. 2 with परमानन्द एव for परानन्दो.

11 ABD अत्र.

त्वेन स्थायिप्रभेदरूपायाः समर्थायां रतेस्तद्विषयालम्बनरूपस्योपपत्तेस्तदाश्रया-
लम्बनरूपाणां परकीयाणामप्रकटलीलागतत्वमायातम्। तथा[1] सामान्य-[2]
स्थायिभावाङ्कुररूपभावलक्षणव्याख्यायां[3] कृ ष्ण स्य स्वरूपशक्तिरूपः
शुद्धसत्त्वविशेषो यः स एवात्मा तन्नित्यप्रियजनाधिष्ठानकतया नित्य-
5 सिद्धं स्वरूपं यस्येति च। अनेन रतिप्रभेदरूपायाः समर्थाया अधिष्ठान-
रूपाणां परकीयाणां नित्यप्रियजनत्वेन परकीयात्वस्य नित्यतयाप्रकटप्रकट-[4]
लीलागतत्वमायातम्। पत्नीभावाभिमानस्य तिरस्कारे सत्येव समर्थापद-
वाच्यत्वं न त्वतिरस्कारे। यथा श्री लो च न रो च न्यां समञ्जसालक्षण-
व्याख्यायां

10 तदभिमानस्य तिरस्कारे सति समर्थाया इव स्थित्यभावश्च व्यक्तः[5]

इति। अस्य [74a] स्फुटार्थः। तदभिमानस्य तिरस्कारे सति समर्था
भवति। तदतिरस्कारे समञ्जसैव।[6] अत एव समर्थाया इव स्थित्यभावश्च
व्यक्त इति। अत एवाप्रकटलीलायां पत्नीभावाभिमानतिरस्कारः।
अन्यथा समर्थाया अभावः[7]। अत एव श्री लो च न रो च न्यां पूर्वापर-
15 सम्बन्धत्वं विना यत्किञ्चिल्लिखनं वर्तते तत्खलु परमतं न तु स्वमतम्। यथा
श्री लो च न रो च नी टीकाकृद्भिरुक्तं तस्यामेव टीकायां

---

1 अप्रकटनित्यत्वम्।

2 C omits सामान्य.

3 Here is an exposition of स्थायि-भाव on the basis of the definition given by BRS(K), p. 43, which is cited below :

शुद्धसत्त्वविशेषात्मा रतेर्मुख्येति कीर्त्यते।
मुख्यापि द्विविधा स्वार्था परार्था चेति कीर्त्यते॥

भाव again is defined in BRS(K), p. 12 as follows :

शुद्धसत्त्वविशेषात्मा प्रेमसूर्यांशुसाम्यभाक्।
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते॥

4 BC omit ०प्रकट.

5 It is not traced in the extant LR on UN, p. 403 where *samañjasā* is defined. V i ś v a n ā t h a C a k r a v a r t i n in his *Ānandacandrikā*, a commentry on UN, (*loc. cit.*) equally refers to this as the view of Ś r ī-j ī v a g o s v ā m i n, where he omits the reading, समर्थाया इव.

6 यथोपपत्त्यभावे समर्थायाः स्थित्यभावस्तथा पत्यभिमानाभावे समञ्जसाया स्थित्यभावो व्यक्तः।

7 BCD ०भावात्.

स्वेच्छया लिखितं किञ्चित्किञ्चिदत्र परेच्छया ।
यत्पूर्वापरसम्बन्धं तत्पूर्वमपरं[1] परम् ॥१०२॥[2]

इति ।

अनन्यपदवाच्यत्वमीषत्कर्म सकृत्कृतम् ।
यथापगमयेदेवं कादाचित्कमपि ध्रुवम् ॥
समर्थापदवाच्यत्वं सामञ्जस्यमधो नयेत् ॥१०३॥

इति ।

परोढात्वं विना न स्याद्दूत्यं व्यङ्ग्यं तथाङ्गिकम् ।
चाक्षुषञ्च तथा वृन्दाधीरादिरचितं हि तत् ॥१०४॥
तदभावे[3] सुवैदग्ध्यहानिरत्र न संशयः ।
तथा वृन्दादिदूतीनां पिष्टपेषविधायिता ॥१०५॥
परोढात्वं विना कर्पा[74b]भावाद्दश्याश्च सा[4] मता ।
परोढात्वं विना वृन्दावनं स्यादप्रयोजकम् ॥१०६॥
किलकिञ्चितविब्बोक[5]मुखालङ्कृतयश्च याः ।
परोढात्वं विना न स्युश्चमत्कारविधायिकाः ॥१०७॥
विनाभिसारिकात्वादिचमत्कारं न तद्युतः ।
सम्भोगः स्यात्परोढात्वं विनासौ च न सम्भवेत् ॥१०८॥
तथा नायिकाया दूत्ये वयस्याया नियोजनम् ।
क्रियते यत्परोढात्वं विना तच्च न सम्भवेत् ॥१०९॥

परोढात्वं विना यूथे नायिकाप्राया द्विसमा[6] सखीप्राया नित्यसखीति चतुर्णां भेदानामभावः । नित्यनायिकाया[7] अपि गौणदूत्याभावः । सखीनाञ्च मिथः प्रेमगुणोत्कीर्त्त्यादीनामप्रयोजकत्वम् । स्वपक्षः सुहृत्[8]पक्षस्तटस्थः प्रतिपक्षक[9] इति चतुर्णां भेदानाञ्च चमत्कारावहत्वम् । परोढानाम-

---

1 स्वीयात्वस्थापनम् ।

2 LR on UN, p. 30 with ॰सम्बद्ध' in c.

3 दूत्याभावे ।

4 पिष्टपेषविधायिता ।

5 इष्टेऽपि गर्वमानाभ्यां विब्बोकः स्यादनादरः ।

6 समसखी ।

7 C ॰कानाम्.

8 C स्वकृत॰.

9 भावस्य सर्वथैवात्र साजात्ये स्यात्स्वपक्षता ।
मनागेतस्य वैजात्ये सुहृत्पक्षत्वमीरितम् ॥
साजात्यस्य तथाल्पत्वे सति ज्ञेया तटस्थता ।
सर्वथा खलु वैजात्ये निश्चिता प्रतिपक्षता ॥

समञ्जसरत्याश्रयत्वात्। तदभावे[1] तेषां सत्ताप्रयोजकत्वचमत्काराभावो न्याय्यः। अतः साधूक्तं मु नि ना

रसः परकीयायाम्

इति। अतोऽप्रकटलीलायां परकीयात्वाभावे [75a] तत्तदभावाद्रसोत्कर्ष-
हानिः स्यात्। तस्मात्परकीयात्वमप्रकटलीलागततया सदा परमोत्कर्षा-
वहम्। भक्तिरसमात्रस्य परमपुरुषार्थतया नित्यता किमुत शृङ्गारस्य किमुत तत्साररूपस्य समर्थारतिस्थायिकस्य तत्प्रभेदस्य। यथा श्री र सा-
मृ त सि न्धौ

अथास्याः के श व रतेर्लक्षिताया निगद्यते।
सामग्रीपरिपोषेण परमा रसरूपता ॥११०॥
विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
स्वाद्यत्वं हृदि भक्तानामानीता श्रवणादिभिः ॥१११॥
एषा कृ ष्ण रतिः स्थायी भावो भक्तिरसो भवेत्।
प्राक्तन्याधुनिकी चास्ति यस्य सद्भक्तिवासना ॥११२॥
एष भक्तिरसास्वादस्तस्यैव हृदि जायते।
भक्तिनिर्धूतदोषाणां प्रसन्नोज्ज्वलचेतसाम् ॥११३॥
जीवनीभूत गो वि न्द पादभक्तिसुखश्रियाम्।
प्रे मान्तरङ्गीभूतानि कृत्यान्येवानुतिष्ठताम् ॥११४॥
भक्तानां हृदि राजन्ती संस्कारयुगलोज्ज्वला।
रति[75b]रानन्दरूपैव नीयमाना तु रस्यताम् ॥११५॥
कृ ष्णा दिभिर्विभावाद्यैर्गतैरनुभवाध्वनि।
प्रौढानन्दचमत्कारकाष्ठामापद्यते पराम् ॥११६॥[2]

इति। अप्रकटलीलायां परकीयात्वहानौ सत्यां भक्तिरसमात्रस्य परम-
पुरुषार्थताहान्या नित्यताहानिः स्यात्। किञ्च[3]

---

1 For it C अभावे.

2 BRS(K), p. 16.

3 ननु प्रकटाप्रकटयोः सदा सर्वा लीला नित्या चेत्तदा गोपालोपासकानां कथं प्रकटलीलायां प्राप्तिः श्रूयते कथं पुनर्गोपकन्यात्वेन जन्मेति। अत एव तेषां भावस्य कथं नित्यताजातकौमारावस्थायां रतेः सङ्कोचापत्तेः। अत एव प्रकटाप्रकटयोर्भेदेन यल्लीलाद्वैविध्यं मयोक्तं तद्युक्तमेवेत्यत न हि न हीत्याह तत्प्रमाणव्याहैयानेन।

गो पा लो पासकाः पूर्वम्[1]

इत्यादिपद्ये लब्धभावा व्र ज गोप्यो जाता इत्यस्यायमर्थः[2]। लब्धभावाः सन्तो यदा लब्धभावास्तदैवे[3]त्यर्थः। अनेन प्रकटलीलापेक्षा निरस्ता। गोप्यो गोपैर्व्यूढात्वेन न न्द न न्द न प्रिया अप्रकटलीलायामेव जाताः। अन्यथा रा म सौन्दर्यदर्शनोद्बुद्ध[4]रतित्वं चतुर्विंशचतुर्युगे। कृ ष्ण-
5 लीलायाः प्राकट्यमष्टाविंशचतुर्युगे। कृ ष्ण प्रकटलीलायां तेषां प्राप्तिः कथं न्याय्या। एवं

समन्तात्सूक्ष्मदर्शिन्यः[5]

इत्यादिपद्यस्यार्थः। गोपीनां वीक्ष्य सौभाग्यं सूक्ष्मदर्शित्वादप्रकटलीलायां गोपीनां परोढानां रा धि का [76a]दीनां सौभाग्यमसमोर्ध्वप्रियात्वं वीक्ष्य
10 प्रेमाढ्या व्र जे बह्व्यो जज्ञिरे। यदा प्रेमाढ्यास्तदैवेति प्रकटलीलापेक्षा निरस्ता। अत एवाप्रकटलीलायामेव बह्व्यो बहुव्यूढात्वेन कृ ष्ण प्रिया जाताः। अत एव

काले काले[6] व्र जे ऽभवन्[7]

इति काले काले तद्योग्यानुरागस्य प्राप्त्यनन्तरं न तु प्रकटलीलापेक्षा।
15 अन्यथा श्री कृ ष्ण स्य सुसेव्यत्वहानिः। अत एव नवा इति प्रभेदोऽयौथि-

---

1 UN, p. 62. The full verse is:
गोपालोपासकाः पूर्वमप्राप्ताभीष्टसिद्धयः
चिरादुद्बुद्धरतयो रामसौन्दर्यवीक्षया।
मुनयस्तन्निजाभीष्टसिद्धिसम्पादने रताः
लब्धभावा व्रजगोप्यो जाताः पाद्म .
इतीरितम् ॥

2 C इत्यर्थः.

3 तस्मिन्नेव व्रजप्राप्तिः स्यादित्यर्थः।

4 ABD दर्शनादुद्बुद्ध॰.

5 UN, p. 65. The explanation given above is based on the full text of the verse:
समन्तात्सूक्ष्मदर्शिन्यो महोपनिषदो-
ऽखिलाः।
गोपीनां वीक्ष्य सौभाग्यमसमोर्ध्व-
सुविस्मिताः ॥
तपांसि श्रद्धया कृत्वा प्रेमाढ्या
जज्ञिरे व्रजे।
बह्व्य इति पौराणी तथोपनिषदी
प्रथा ॥

6 स्वस्वप्रेमोत्पत्तिसमयोचितकाले।

7 UN, p. 67. The full verse:
तद्भाववद्धरागा ये जनास्ते साधने रताः।
तद्योग्यमनुरागौघं प्राप्योत्कण्ठानुसारतः ॥
ता एकशोऽथवा द्वित्राः काले काले व्रजे-
ऽभवन्।
प्राचीनाश्च नवाश्च स्युरयौथिक्यस्ततो द्विधा ॥

कीनामेव कृतो न तु यौथिकीनाम्। ननु गो लो क स्यैश्वर्यमयत्वात्तद्गत-[1]
परिकराणां सदैश्वर्यानुसन्धानात्तत्प्रापकसाधनपराणां तत्प्राप्तौ तेषामनु-
वृत्तेरन्यथात्वाभावादैश्वर्यप्रधानलीलारसस्यान्यथात्वं न स्यात्। श्री व्र ज-
स्य तु माधुर्यमयत्वात्तद्गतपरिकराणां[2] केवलमाधुर्यानुसन्धानात्तत्प्रापक-
5 साधनपराणां तत्प्राप्तौ कथं तेषां[3] तेषाञ्च[4] नरलीलारसः स्यात्। तदुप-
मर्यैश्वर्यानुसन्धानात्तत्राह। जन्माद्याः सर्वा नरलीला अनन्ताः श्री कृ ष्ण-
तत्परिकर[76b]धामसमयानामनन्तप्रकाशैः सह सदा वर्तमानाः स्वस्व-
साधनानुरूपभावनानुसारेण क्रमेण[5] तत्तद्योग्यताप्राप्त्या[6] तत्तल्लीलाप्राप्तैः
साधकानां नरलीलारसः स्यादेव। अचिन्त्यशक्तिलीलावेश यो ग मा या सेवित-
10 श्री कृ ष्ण तत्परिकराणां कल्पौ[7] व्याप्य रासलीलायामिव तस्यां तस्या[8]मे-
कस्यां लीलायां स्थितत्वेऽपि कल्पयोः[9] क्षणवद्ब्रासमानयोः क्षणत्वमनना-
त्तत्तल्लीलाः क्रमेण प्राप्तानां समानकालीनत्वमननाच्च नरलीलारसभङ्गो
न स्यादेवेति। अनेन साधकानामवतारलीलायां प्राप्तिरिति स्पष्टादि-
विमतत्रयगतसिद्धान्तो निरस्तः। किञ्च चतुर्थपुरुषार्थस्य मोक्षस्यापि
15 नित्यत्वं। किमुत पञ्चमपुरुषार्थस्य भक्तिमात्रस्य। तत्रापि

नित्यसिद्धस्य भावस्य प्राकट्यं हृदि साध्यता[10]

इति नित्यसिद्धस्य भावस्य नित्यत्वे का चित्रता। तत्रापि रसराजस्य
स्थायिरूपत्वात्परमश्रेष्ठाया मधुराया रतेर्नित्यत्वे का चित्रता। तत्रापि
मधुररतिसाररूपायाः [77a] समर्थाया नित्यत्वे का चित्रता। साधनभक्ते-
20 रपि पञ्चमपुरुषार्थता। यथा तृतीयस्कन्धे

अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे[11]

सालोक्यसार्ष्टि॰सारूप्य॰[12]

---

1 C तत्तत्॰.
2 C omits from तत्प्राप्तौ तेषामनुवृत्ते॰ परिकराणाम्.
3 नित्यधामगतपरिकराणाम्।
4 तत्प्रापकसाधनपराणाम्।
5 BD omit it. C adds रतेः.
6 AB here insert क्रमेण.
7 उदयास्तकल्पौ॰।
8 जन्मादिलीलायां नरलीलायाम्।
9 खण्डप्रलयमहाप्रलययोः।
10 BRS(K), p. 3.
11 BP, III. 29. 12$^{c-d}$.
12 BP, III. 29. 13$^{a-b}$.

इत्यादिलक्षितायाः सामान्याया भक्तेः प्रभेदरूपत्वात्तस्या अत एवाप्रकट-
लीलायां समर्थाया रतेः[1] अन्यथात्वे तस्या अनित्यतया सर्वेषां पूर्वोक्तानाम-
नित्यत्वदोषः सुतरामेव स्यात्। ननु कथं व्र ज दे वी नामेव भावस्य
समर्थेति संज्ञा। महिषीणामपि भावस्य सा संज्ञा न सम्भवेत्। यतो[2]
5 भक्तिमात्रस्य समर्थत्वेन चतुर्वर्गतिरस्कारितया पञ्चमपुरुषार्थता। तस्य
धर्मरूपप्रथमपुरुषार्थतिरस्कारे को विस्मयः। तथापि[3] महिषीणां भक्ति-
स्वारूपस्य भावस्य तत्तिरस्कारे का चित्रता। अतो महिषीणां वाक्यं

न वयं साध्वि साम्राज्यं स्वाराज्यं भौज्यमप्युत।
वैराज्यं पारमेष्ठ्यञ्च आनन्त्यं वा ह रेः पदम्।
10 कामयामह एतस्य श्रीमत्पादरजः श्रियः ॥११७॥[4]

इति। अन्यथा पञ्चमपुरुषार्थतामात्रहानिः। अतो व्र ज दे वी नां भावस्य
हस्ति[77b]स्थानीयतया धर्मदुर्गतिरस्कारेण समर्थेति संज्ञा। महिषीणां
भावस्य शशकस्थानीयतया धर्मदुर्गतिरस्कारासामर्थ्येन समञ्जसेति संज्ञा
कथं न्याय्या। महिषीणामपि चेदन्येन सहोद्वाहं यो ग मा या घटयिष्यत्।
15 तदा तासामपि भावो धर्मदुर्गमलङ्घयिष्यत्। ऐश्वर्यानुसन्धानमयस्य
माधुर्यानुसन्धानमयस्य च भावस्य चतुर्वर्गतिस्कारी स्वभाव एव।

न हि वस्तुशक्तिर्बुद्धिमपेक्षते

इति न्यायात्तत्राह[5]। शुभ्रांशुद्युतिसम्पर्कस्यन्दनहेतुकचन्द्रकान्ताभिधान-
वद्दुस्त्यजस्वजनार्यपथत्याजनसामर्थ्यहेतुकसामर्थ्याभिधानं चन्द्रकान्तवि-
20 द्रावणे चन्द्रस्येव[6] दुस्त्यजस्वजनार्यपथत्याजने समर्थाया एव सामर्थ्यम्।
दुस्त्यजत्वं त्रिवर्गगतस्वजनार्यपथव्यावृत्त्यर्थम्। पञ्चमपुरुषार्थमात्रस्य
तदादित्याजनसामर्थ्यात्। अनयोः स्वजनार्यपथयोर्मायासम्बन्धरहित-
श्री वै कु ण्ठ सुखाधिकपरमधामश्री व्र ज गतत्वादप्राकृतत्वं मोक्षलघुता-

1 ABD omit it.
2 BCD omit it.
3 AC तत्रापि.
4 BP. X. 83. 41-42. ABC omit कामयामह० श्रियः.
5 विषामृतवत्।
6 चन्द्रकान्तविद्रावणे चन्द्रस्यैव सामर्थ्यं न तु सूर्यस्य।

कृतत्वञ्च । वै कु ण्ठ सुखाधिकसुखहेतुत्वञ्च । अतोऽनयोस्त्याजन[1]वैशिष्ट्य-
कारित्वेन परमसामर्थ्यस्य सदा प्रकटनात् [78a] समर्थेति संज्ञा न्याय्येति ।
ननु श्री कृ ष्ण प्रेयसीनां मधुराया रतेः पञ्चमपुरुषार्थसाररूपत्वात्तासु सम्भो-
गेच्छा कथं सम्भवति[2] । अस्याः कादाचित्कोद्गमान्महिषीभावस्य व्र ज-
5 दे वी भावतो न्यूनत्वम् । तत्राह । तासां[3] पञ्चमपुरुषार्थसाररूपा मधुरा
रतिर्द्विधा । कामायमानाकामायमाने सदा समेते इति । अतः कामायमानैव
सम्भोगेच्छात्वेन कथ्यते । समर्थायां सा[4] तादात्म्यमापन्ना न समञ्जसाया-
मिति ।

लघुत्वमत्र[5]

10 इत्यादिपद्यस्यार्थः

लघुत्वमितिपद्यस्य[6] व्याख्या मूलनिसूदनी ।
ततो व्याख्या निषेव्यास्य मया या मूलसम्मता ॥११८॥

अत्रोत्कर्षेण पतिं तिरस्कृत्याङ्गिनि रत उपस्थित उपपतौ लघुत्वं[7] विधर्मा-
लम्बनत्वादि[8]रूपं प्राकृतनायके पञ्चमपुरुषार्थाविषये। पञ्चमपुरुषार्थस्य चतु-
15 र्वर्गतिरस्कारित्वस्वभावात् । अत एव

यथा तरोर्मूल[9]

इत्यादिना

न धर्मं नाधर्मम्[10]

1 ABD ॰स्त्याग॰.

2 कामस्य त्रिवर्गगतत्वेन श्रीकृष्णप्रेयसीषु तदभावात्सम्भोगेच्छा न सम्भवति ।

3 कृष्णप्रेयसीनाम् ।

4 सम्भोगेच्छा ।

5 UN, pp. 14-15. The full verse:
लघुत्वमत्र यत्प्रोक्तं तत्तु प्राकृतनायके ।
न कृष्णे रसनिर्यासस्वादार्थमवतारिणि ॥

6 C ॰मूलस्य.

7 C omits it.

8 A omits ॰त्वादि॰.

9 BP, IV. 31. 14a. The full verse is:
यथा तरोर्मूलनिषेचनेन
तृप्यन्ति तत्स्कन्धभुजोपशाखाः ।
प्राणोपहाराच्च यथेन्द्रियाणां
तथैव सर्वार्हणमच्युतेज्या ॥

10 SA, p. 25. The full verse is:
न धर्मं नाधर्मं श्रुतिगणनिरुक्तं किल कुरु
व्रजे राधाकृष्णप्रचुरपरिचर्यामिह तनु ।
शचीसूनुं नन्दीश्वरपतिसुतत्वे गुरुवरं
मुकुन्दप्रेष्ठत्वे स्मर परमजस्रं ननु मनः ॥

इति निषिद्धाधर्मापाताच्च। न कृष्णे पञ्चमपुरुषार्थसार[1]विषये। रस-
निर्यासस्वादार्थं चतुर्वर्गतिरस्कारिपञ्चमपुरुषार्थसारास्वादप्रापणाय। यद्वा।
प्राकृतनायक इति रागस्य परमेयत्तापन्नवृत्तेरभावान्न कृष्ण इति तस्याः
सद्भावात्। यद्वा। भावसुष्ठुनिष्ठाया अभावसद्भावाभ्यां तत्तत्त्वमिति[2]।
5 तस्याः[3] सद्भावोऽत्र[4]।

यद्वाञ्छया श्रीर्ललनाचरत्तपः[5]

इत्यादिना तपश्चरणेनापि लक्ष्म्या[6] दुर्लभतद्विहारत्वमिति। यद्वा
श्रीव्रजदेव्यनुगतिं विना श्रीनन्दनन्दनलीलाया लक्ष्म्या अपि
दुर्लभत्वादिति यद्वाञ्छया श्रीर्ललनाचरत्तप इति।

10 गोपीनां पशुपालनन्दनजुषः[7]

इत्यत्र तथा।[8] यद्वा प्राकृतनायक इति बहिर्मुखजनसमाधानकारि-
योगमाया द्वितीयवृत्त्यसेवितत्वादौपपत्यस्य परकीयाभर्त्रादिसमाधान-
कारि योगमाया प्रथमवृत्त्यसेवितौपपत्यत्वेन तत्कृतद्वेषलज्जोद्गमादिना
वैरस्यापाताच्च।

15 न कृष्णे[9]

इत्यादि [79a] बहिर्मुखजनसमाधानकारि योगमाया द्वितीयवृत्तिलीला-
शक्तिसेवितत्वादौपपत्यस्याभिमन्य्वादिसमाधानकारि योगमाया-
प्रथमवृत्तिसेवितौपपत्यत्वेन तत्कृतद्वेषलज्जोद्गमाद्यभावाच्च। यद्वा। शक्तिम-
च्छ्री[10]कृष्णपरमसुखहेतुत्वेनाऽरुन्धतीमुखसतीवृन्दवन्द्यत्वात्परकीयात्वं

---

1 C omits ०सार०.

2 प्राकृतनायके कृष्णे लघुत्वमलघुत्वम्।

3 भावसुष्ठुनिष्ठायाः।

4 कृष्णे. C only सद्भाव०.

5 BP, X 16. 36c.

6 C लक्ष्मी०.

7 LM, VI. 14 with पशुपेन्द्र० for पशुपाल०. See *ante*, II, 55 ; p. 68, line 18.

8 C omits यद्वा श्रीव्रजदेव्यनुगतिं० तथा.

9 UN, p. 15. For the full text see *ante*, p. 129, foot note 5.

10 C ०मत्०.

परमसतीत्वं । तदुपयोगित्वादौपपत्यस्य[1] रसनिर्यासस्वादार्थं तत्तदास्वादप्रापणार्थमवतारिणि प्रपञ्चगोचरीकृतौपपत्यादिके। यद्वा स्वादोऽत्र ण्यर्थः। अवतारिणि[2] अवतारावलीबीजे। अवतारेऽपि लघुत्वं न सम्भवेत् । किमुतावतारिणि। नन्ववतारावलीबीजत्वं किमर्थम्। तत्राह रसनिर्यास-
5 स्वादार्थम[3]वतारावल्या तद्विधातृकविश्वसृष्टिपालनादिसम्पादनं विना तदेकप्रयोजकस्य स्वस्य तदसिद्धेरिति। परकीयात्वस्य परमसतीत्वम्। यथा

रागोल्लासविलङ्घितार्यपदवीविश्रान्तयोऽप्युद्दुर-
श्रद्धारज्यद [79b] रु न्ध ती मुखसतीवृन्देन वन्द्येहिताः।
आरण्या अपि माधुरीपरिमलव्याक्षिप्तलक्ष्मीश्रिय-
10 स्ता त्रैलोक्यविलक्षणा दधतु वः कृ ष्ण स्य सख्यः सुखम् ॥११६॥[4]

इति। अस्यार्थः। अ रु न्ध ती मुखसतीवृन्दस्य सतीत्वं निमित्तं । रागोल्लासविलङ्घितार्यपदवीविश्रान्तिस्वरूपेहितवन्दनं नैमित्तिकम्। अन्यथा ऽरु न्ध तीमुखसतीवृन्देति प्रयोगस्याप्रयोजकत्वाद् । अपिशब्दस्य स्पष्टविरोधवाचकत्वेन गूढार्थे विरोधाभावाच्च। अनेन तदीहितस्य परमसतीत्वरूपत्वमायातम्। पञ्चमपुरुषार्थसाररूपतदीहितस्यैव शक्तिमच्छ्री[5] कृ ष्ण परम-
15 सुखहेतुत्वेना ऽरु न्ध ती मुखसतीवृन्दस्य प्रथमपुरुषार्थमात्रदृष्ट्यापि सतीत्वरूपप्रथमपुरुषार्थसीमारूपत्वेन प्रतीयमानत्वात्। अत एव

रागेणोल्लङ्घयन्धर्मम्[6]

इत्यत्र

धर्मेणास्वीकृताः[7]

20 इत्यत्र च धर्मपदेन समञ्जसास्वरूपप्रथमपुरुषार्थायमानाभिमाननिमित्तक्रियाख्यानम्[8]। अतए[80a]व समर्थानिमित्तक्रियायाः[9] प्रथमपुरुषार्थविरुद्धायमानत्वेऽपि प्रथमपुरुषार्थसीमारूपायमानत्वं तस्य[10] तत्सुखहेतुत्वम्। यथा

---

1 न लघुत्वम्।

2 C omits प्रपञ्च॰ अवतारिणि.

3 C omits तत्राह॰ स्वादार्थम्.

4 Cited in UN, pp. 52-53 with वन्द्ये हिताः for वन्द्येहिताः and ददतु for दधतु. C omits the last two lines of the verse.

5 ABC ॰मत्॰.

6 UN, p. 12. See *ante*, I. 35.

7 UN, p. 52. See *ante*, I. 36.

8 पत्नीभावाभिमाननिमित्तपाणिग्रहणादिकथनम्।

9 लोकधर्मत्याग-[रूपायाः]।

10 कृष्णस्य।

यत्र निषेधविशेषः सुदुर्लभत्वञ्च यन्मृगाक्षीणाम् ।[1]
तत्रैव नागराणां निर्भरमासज्यते हृदयम् ॥१२०॥[2]

इत्यादि । अत एव परमशक्तित्वाच्छ्री व्या स पादैरुक्तं गौण्या वृत्त्यास्वाद्यं

कृ ष्ण वध्वः[3]

5 इति । अत एव श्री दा स गो स्वा मि चरणैरुक्तं गौण्या वृत्त्यास्वाद्यं

विहरत इह यस्मिन्दम्पती तौ प्रमत्तौ[4]

इत्यत्र दम्पती इति । अत एव श्री क वि रा ज गो स्वा मि पादैरप्युक्त गौण्या वृत्त्यास्वाद्यं

पातिव्रत्यं क नु परवधूत्वापवादः क चायम्

10 इत्यादिना । अथ केनाप्युक्तं गौण्या वृत्त्यास्वाद्यं

त्वां पातु रा धा धवः

इति ।

गोपी भर्तुः[5]

इत्यत्र गोपी गोपस्य पत्नी ।

15 पुंयोगादाख्यायाम्[6]

ङीप्[7]

इति सूत्रात् । पुनरुक्तस्या भर्तुरुपपतेरित्यर्थः । एवम्

अनेकजन्मसिद्धानां गोपीनां पतिरेव[8]

इत्यत्र गोपीनां गोपैर्व्यूढानामित्यर्थः । किञ्च

किं [80b] पादान्ते लुठसि विमनाः स्वामिनो हि स्वतन्त्राः
20 कञ्चित्कालं क्वचिदभिरतस्तत्र कस्तेऽपराधः ।

---

1. ABC omit this line.
2. Cited in UN, p. 54 as attributed to *Viṣṇuguptasaṃhitā*.
3. BP, X. 33. 7ᶜ. The full line is स्विद्यन्मुख्यः कबररशनाग्रन्थयः कृष्णवध्वः.
4. SA, p. 70.
5. *Padāṅkadūta* (?), 1. The full line : गोपी भर्तुर्विरहविधुरा काचिदिन्दीवराक्षी. C omits it.
6. *Pāṇini*, IV. 1. 48.
7. *Pāṇini*, IV. 1. 40.
8. GT, II. 26. D पतिः.

आगस्कारिण्यहमिह यया जीवितं त्वद्वियोगे
भर्तृप्राणाः स्त्रिय इति ननु त्वं मयैवानुनेयः ॥१२१॥[1]

इत्यत्र प द्या व ली गतपद्ये स्वामिन इति भर्तृप्राणा इति स्वामिभर्तृशब्दौ समानार्थौ। एतयोः प्रयोगः परमौदास्यव्यञ्जकादरमयत्वेन सोत्प्रास[2] एव। 5 गच्छन्तु स्वामिपादा इतिवत्। किञ्च श्री गो पा ल ता प न्यां

स वो हि स्वामी भविष्यति[3]

इत्यत्र स्वामिशब्दो न परिणेतृवाचकः किन्तु नेतृवाचकः। स्वामिशब्दस्य नेतृवाचकत्वं। यथा ऽ म रे

स्वामी त्वीश्वरः पतिरीशिता
10 अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः[4]

इति। किञ्च

वधूर्जाया स्नुषा स्त्री च[5]

इति वधूशब्दः स्त्रीवाचकोऽपि। अत एव कृ ष्ण व ध्वः कृ ष्ण स्य स्त्रियः कृ ष्णै कभोग्या इत्यर्थोऽपि सङ्गच्छत इति। यद्वा तदीहितस्य तद्वन्धत्वं 15 पञ्चमपुरुषार्थसार[81a]त्वादि[6]चतुष्टयस्य पूर्वश्लोकोक्तस्य सद्भावात्। किञ्च

चतुर्वर्गो रसः स्यान्न नोदकं स्याद्यथा दधि।
क्षीरं तत्स्याद्यथा ह्येवं पुमर्थः पञ्चमो रसः ॥१२२॥
चतुर्वर्गतिरस्कारैर्यत्रोत्कर्षप्रकाशनम्।
स मुख्यः स्याद्रसः ख्यातो यथा श्री रा धि का दिषु ॥१२३॥
20 नेष्टा यदङ्गिनी[7]त्यादि पद्ययोर्बहुसङ्गतम्।
व्याख्यानं गृह्यते तस्माद्यथाख्या या स्यात्सुसङ्गता ॥१२४॥

---

1 Cited anonymously in PA, 381, p. 174; cited in KVS, 356 as attributed to one, V ā k k ū t a.

2 C सोत्प्रकाश.

3 GTāp, 83. It has स्वामी स वो भवति.

4 AK, III. 1. 10-11, p. 193.

5 AK, III. 3. 102, p. 227.

6 आदिशब्दाद्रागस्य परमेयत्तापन्ना वृत्तिर्भावसुष्ठुनिष्ठा बहिर्मुखजनसमाधानकारियोगमायाप्रथमवृत्तिद्वितीयवृत्तिसेवितत्वमिति। 7 See III. 125, below.

नेष्टा यदङ्गिनि रसे कविभिः परोढा-
स्तद् गो कु ला म्बुजदृशां कुलमन्तरेण ।
आशंसया रसविधेरवतारितानां
कं सा रि णा रसिकमण्डलशेखरेण ॥१२५॥[1]

5 अस्यार्थः[2] । कविभिः परोढा यदङ्गिनि रसे नेष्टास्तद् गो कु ला म्बुज दृशां कुल-मन्तरेण गो कु ला म्बुजदृग्रूपपरोढानान्तु कुलं नित्याप्राकृताङ्गिरसनिर्यासा-श्रयालम्बनरूपं कवीनां तेषां मनोवचनागम्यम् । तत्र हेतुः । रसविधेः स्वेन नित्यमास्वाद्यमानस्य रसनिर्यासस्याशंसया प्रपञ्चगतभक्तकर्तृकास्वाद-नेच्छया । य[81b]द्वा रसविधिर्मद्विधानां भागधेयेन कदा प्रकटो भविष्यतीति 10 श्री व्या सा दिकृतप्रार्थनया । यद्वा तदादिकृतस्तुत्या परमोत्कर्षप्रकटनेन प्रपञ्चगतभक्तजनपरमोत्कण्ठोत्पादनात् । यद्वा रसविधेर्हेतोराशंसया प्रपञ्चगता मद्भक्ता इमं रसविधिमास्वाद्य तदनुसारेण मां भजन्तः सन्त एतज्जातीयप्रेमाणमापद्य[3] परमानन्दमाप्नुवन्तीतीच्छया[4] । यद्वा आदाव-वतीर्य पश्चाद्रसविधेरिच्छयावतारितानां प्रपञ्चगोचरीकृतरसनिर्यासनिमित्त-15 नित्यपरोढात्वानाम् । अत्र हेतुगर्भविशेषणञ्च रसिकमण्डलशेखरेणेति । रसनिर्यासस्वरूपनिमित्तप्रकटनाभावे रसिकमण्डलशेखरत्वरूपनैमित्तिक-[5] प्रकटनासिद्धेः । यद्वा उत्कर्षेण परोढा[6] एवाङ्गिनि रस[7] उपस्थिता न स्वकीया-स्तथापि कविभिः परोढा[8] नेष्टाः । पञ्चमपुरुषार्थसाराश्रयत्वसम्भोगतृष्णा-सार्वदिकस्वताप्रापकरतिविशेषरागपरमेयत्तापन्नवृत्तिभावसुष्ठुनिष्ठाभावात् । 20 अत ए[82a]व विधर्मादेः सद्भावात्परोढात्वस्य बहिर्मुखजनसमाधानकारि-यो ग मा या द्वितीयवृत्त्यसेवितत्वाच्च । पत्यादिसमाधानकारि यो ग मा या-प्रथमवृत्त्यसेवितत्वाच्च[9] । अत्राधर्मलज्जोद्गमद्वेष[10]हेतुत्वाच्च । गो कु ला म्बुज-

1 Cited in UN, pp. 99-100.
2 B omits कविभिः परोढा० अस्यार्थः.
3 C ०मास्वाद्य०.
4 अवतारितानाम् ।
5 उपपत्तित्व० ।
6 अत्र प्राकृतपरोढाः ।
7 शृङ्गाररसे ।
8 प्राकृतपरोढाः ।
9 नेष्टाः ।
10 C adds ०सेवित०.

दृशां कुलमन्तरेणेति तत्तत्[1]सद्भावाद्बहिर्मुखजनसमाधानकारि यो ग मा या-
द्वितीयवृत्तिसेवितपरोढात्वाच्च। परोढात्वस्यैव परमपातिव्रत्यरूपत्वाच्च।
पत्यादिसमाधानकारि यो ग मा या प्रथमवृत्तिलीलाशक्तिसेवितपरोढात्वाच्च।
अतः[2] पत्यादिकृतद्वेषतद्विषयलज्जोद्गमाभावाच्च। रसविधे रसनिर्यासस्या-
5 शंसयेच्छयावतारितानामनादितया परमप्रेयसीत्वेनात्मनः पृथक्त्वेन[3] प्रका
शितानामिति।

वामता दुर्लभत्वञ्च[4]

इत्यादिपद्ये[5] प्रतीयमानसामान्यपरोढासालक्षण्यगतोत्कर्षं दर्शयित्वा नेष्टा
यदङ्गिनीत्यादिपद्येनानेन तद्वैलक्षण्यं दर्शयित्वा तत्सालक्षण्यं प्रतीयमानं
10 दोषांशं निराकृत्य परमोत्कर्षः प्रदर्शित इति।

प्रतीयमानं दोषांशं निराकृत्य जगद्गुरुः।
द्वैरूप्यभ्रममज्ञानां लीलागतमपानुदत्॥१२६॥

ए का द शे

मत्कामा रमणं जा[82b]रमस्वरूप[6]विदोऽबलाः।
15 ब्र ह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः॥१२७॥[7]

अस्यार्थः। ता[8] अबला मां प्रापुः। तासां मम परमशक्तिरूपाणां नित्य-
प्रेयसीनां सङ्गादन्या अपि तदानीमेव गो कु ल भाजः शतसहस्रशो मां
प्रापुः[9]। द न्त व क्रं निहत्य व्र जं गत्वा मयि न न्द न न्द न रूपे पूर्ण-
तमप्रकाशे प्रविष्टे सति तासां या मध्ये मध्ये श्री कृ ष्णो ऽस्मान्हित्वा म थु रां

1 पञ्चमपुरुषार्थसाराश्रयत्वादेः।

2 C ततः.

3 राधाकृष्ण एक आत्मा दुइ देह धरि।
अन्योन्ये विलसे रस आस्वादन करि॥
(CC, I. 4. 49)

4 Cited in UN, p. 54 as attributed to R u d r a.

5 BD ०पद्यैः.

6 BP, XI. 12. 13. MSS. here ०मप्रमाण० for ०मस्वरूप०. As in the subsequent explanation अस्वरूप० is specified, the latter reading is more consistent.

7 BP, XI. 12. 13.

8 C omits ता.

9 ननु द्वारकानाथेन कथमुक्तमबला गोप्यो मां जारं प्रापुरित्यनेन द्वारकानाथो व्रजं गत्वा पुनर्द्वारकामागतः।

द्वा र का श्च गत इति स्फूर्तिरासीत्पूर्वं सा निवृत्तेत्यर्थः। मामिति स्वस्य श्री न न्द न न्द ने न सहाभेदकथनं ।

प्रकाशस्तु न भेदेषु गण्यते स हि न पृथक्[1]

इति न्यायात्। मां कीदृशं । रमणं कान्तरूपम्। ननु कान्तरूप[2]स्ताव-
5 त्पतिश्चोपपतिश्चेति द्विविधो भवति। तत्राह पुनः कीदृशं । जारमुपपतिमिति विधेयरूपस्य मामित्यस्य विशेष्यस्य विशेषणम्। मामिति विधेयानुवाद-योर्द्वयोरप्यन्वेति।

रागेणोल्लङ्घयन्धर्मम्[3]

इत्यादिलक्षितोपपतिवाचकजार[83a]पदेनैव रतिजनकत्वलब्धावपि रमण-
10 मित्युपादानं रतिपरा[4]काष्ठाजनकत्वापेक्षया। तत्र हेतुः मत्कामा मयि न न्द न न्द ने मम पूर्णतमप्रकाशे कामः पतितत्सम्बन्धिमात्राणां सम्बन्ध-मात्रस्य दुःसहत्वेऽपि सदा न न्द न न्द न रूपमत्पूर्णतमप्रकाशेन्द्रियसुख-वाञ्छायाः समर्थारतिगतत्वात्तथैवाभिलाषो यासां ताः। यद्वा कामः समर्थापरपर्याया कामरूपा भक्तिर्यासां ताः ।

15 ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्[5]

इति न्यायेनेति। अत एव कथम्भूतास्ता अस्वरूपविदः। न विद्यन्ते स्वरूप-विदो याभ्यस्ताः। तादृशप्रेम्णैव यादृशत्वं मम ज्ञायते तदेव मम परम-स्वरूपमिति भावः। आ दि पु रा णे

न मां जानन्ति मुनयो योगिनश्च परन्तप ।
20 न च रु द्रा दयो देवा यथा गोप्यो विदन्ति माम् ॥१२८॥[6]

इत्यादेः।

---

1 LBA, p. 11 with नो for न.
2 C omits ०रूप०.
3 UN, p.12.
4 *Sic.*
5 BG, IV. 14. β omits तांस्तथैव भजाम्यहम्.
6 It is not traced in the *Ādipurāṇa* published in the Benkatesvara Press, Bombay. LBA, p. 183, attributes it to the *Ādipurāṇa*, as the statement of Ś r ī b h a g a v a t.

एताः परं तनुभृतो भुवि गोपवध्वः[1]

इत्यत्र

वाञ्छन्ति यद्भवभियो मुनयो वयञ्च[2]

इति परमस्वरूपविदुद्धवाद्योऽपि यं प्रति लुब्धास्तस्य महाभावस्य
5 परमस्वरूपावधिस्फोरकत्वाच्च। अत एव अबलाः

[83b] ता नाविदन्मय्यनुसङ्गबद्ध-

धियः स्वमात्मानमदस्तथेदम्[3]

इत्याद्यनुसारेण तादृशपरममहाप्रेमपरमावेशान्ममता[4]स्पदाहन्ता[5]स्पदाद्यनु-
सन्धानासमर्था इत्यर्थः। यद्वा

10 न पारयेऽहं निरवद्यसंयुजाम्[6]

इत्याद्यनुसारेण ममाप्यनन्तायुषि तासामृणित्वाच्च विद्यते बलं याभ्यस्ताः
परमसमर्था इत्यर्थः। परमपरमानन्दरूपप्रेमशिरोमणिश्रीमहाभावमयत्वात्ता-
साम्। ता ब्रह्म मां परमं प्रापुर्मुक्ता इति व्याख्या गर्हणीया। शुद्धभजना-
नन्दमात्रादपि मुक्तेः परमतुच्छत्वात्। तद्यथा

15 या निर्वृतिस्तनुभृताम्[7]

इत्यादि।

त्वत्कथामृतपाथोधौ[8]

इत्यादि च।

नारायणपराः सर्वे[9]

---

1 BP, X. 47. 58ᵃ.

2 BP, X. 47. 58ᶜ.

3 BP, XI. 12. 12ᵃ⁻ᵇ. The rest is:

यथा समाधौ मुनयोऽब्धितोये।
नद्यः प्रविष्टा इव नामरूपे॥

4 देहः।

5 आत्मा।

6 BP, X. 32. 22ᵃ.

7 BP, IV. 9. 10ᵃ. The full verse is:

या निर्वृतिस्तनुभृतां तव पादपद्म-
ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्।
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्
किं वान्तकासिलुलितात्पततां विमानात्॥

8 Cited in PA, 43, p. 18 as attributed to Śrīdharasvāmin. The full verse is given below:

त्वत्कथामृतपाथोधौ विहरन्तो महामुदः।
कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपमम्॥

9 BP, VI. 17. 28ᵃ.

इत्यादि च ।

दुरवगमात्मतत्त्वनिगमाय[1]

इत्यादि च । एतदप्राकरणिकत्वादानुषङ्गिकम् । लीला या प्रकटा सैवाप्रकटा । प्रकटायां लीलायां या समर्था रतिरप्रकटायां तस्यां सैव समर्था रतिः । अत एव प्रकटायां या रा धि का दीनां या व ग्रा मा दिषु स्थितिरप्रकटायां तस्यां तासां तेषु सैव स्थितिः । प्रकटा[84a]यां लीलायां श्री न न्दा दीनां सर्वेषां श्री व्र ज वासिनां रा धि का द्य भि म न्व्या दिव्यूढात्वस्य यज्ज्ञानमप्रकटायां[2] तस्यां तेषां तस्य तदेव लीलादीनां द्वैरूप्यं नास्त्येवेति परमतत्त्वजिज्ञासुम् उ द्ध वं प्रति विज्ञापनमस्य पद्यस्य परमप्रयोजनमिति । किञ्च जारत्वेन प्रतीयमानमपि रमणं पतिं प्रापुरिति व्याख्या त्वसङ्गता । समर्था[3]रतिहान्या समञ्जसारत्यापातात् ।

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्[4]

इत्यादिन्यायविरोधाच्च ।

तास्त्रैलोक्यविलक्षणाः[5]

इत्युक्तत्रैलोक्यवैलक्षण्यहानश्च । त्रैलोक्यमत्र म हा वै कु ण्ठ पर्यन्तम् ।

अत्रैव परमोत्कर्षः शृङ्गारस्य प्रतिष्ठितः[6]

इति नियतशृङ्गारपरमोत्कर्षहानेश्च ।

एताः सर्वातिशायिन्यः[7]

इत्यादिपद्यनियतनायिकायाः परमोत्कर्षहानेश्च । जारत्वं खलूपादेयं । महाभावाश्रयपरमेयत्तापन्नरागमूलसमर्थारतिविषयरूपत्वात् । बहिर्मुखजन-समाधानकारि यो ग मा यां द्वितीयवृत्तिसेवितत्वाच्च । पत्यादिसमाधान-[84b]कारि यो ग मा या प्रथमवृत्तिसेवितत्वाच्च । अत्र यो ग मा या-द्वितीयवृत्तेर्बहिर्मुखजनसमाधानकारित्वं वक्ष्यमाणसिद्धान्तकर्तु[8] र्यो ग मा या

1 BP, X. 87. 21a.

2 AB ॰मप्रकटलीलायाँ.

3 BCD ॰मर्थ॰.

4 BG, IV. 14. AB omit भजाम्यहम्.

5 Cited in UN, p. 53. See *ante*, p. 131, line 10.

6 UN, p. 14.

7 UN, p. 62.

8 श्रीसनातनगोस्वामिनः ।

द्वितीयवृत्तिसेवितत्वात्सिद्धान्तकर्तुर्बहिर्मुखजनसमाधानेच्छायां जातायां यो ग मा या द्वितीयवृत्तेः सेवावसरस्ततो रत्या सङ्कुचन्त्या यो ग मा या-द्वितीयवृत्तिरनुगृहीता। किं वा[1] बहिरङ्गत्वेन यो ग मा या द्वितीयवृत्ति-मोहितत्वाद्वक्ष्यमाणमेतद् न्थकर्तुरवहित्था[2] विलसितमिति केचित्। यथा
5 जारत्वं तन्मननमात्रं न तु वास्तवं तन्मननस्यैव परमप्रयोजकत्वात्। तद्वास्त-वत्वस्याप्रयोजकत्वाच्च। तदवास्तवत्वं यो ग मा या विवर्तत्वात्। अत एव यो ग मा या रचिततादृकुस्त्रीपाणिग्रहणेन पतिम्मन्यैर्गोपैः श्री रा धि का-दीनां प्रेक्षणमपि दुष्करं यो ग मा या वृतदृष्टित्वात्। तत एव हेतोस्ताभि-स्तेषां प्रेक्षणमपि दुर्घटम्। अत एव यो ग मा या रचिततादृशेषु[3] तासां
10 पतिबुद्धिर्न तु साक्षात्तेषु[4]। श्री कृ ष्ण नित्यप्रियाणां तासामन्यत्र तद्बुद्धेरप्य-योग्यत्वात्। यो ग मा या कल्पितस्यावास्त[85a]वत्वेन तत्र[5] तद्बुद्धेर्न दोषास्पदत्वं किन्तु महाभावनिमित्तत्वात्परमगुणास्पदत्वम्। ननु जारत्वं प्रतीयमानञ्चेत्तदा वास्तवं पतित्वमायाति। तत्राह

उक्तः पतिः स कन्याया यः पाणिग्राहको भवेत्[6]

15 इति लक्षणप्राप्तं यत्पतित्वं जारत्वस्य प्रतीयमानतया प्राप्तं वास्तवं न स्यात्।[7] किन्तु शक्तिमत्त्वमेव वास्तवम्। व्र ज लीलायां प्रकटाया-मप्रकटायाञ्च सत्यां तस्यां गो लो क लीलायाञ्च कदापि पाणिग्रहणाभावात्। अत एव परकीयत्वस्य प्रतीयमानतया यद्वास्तवमायाति तत्खलु शक्तित्वं न तु स्वकीयात्वम्।

20 करग्रहविधिं प्राप्ताः[8]

इति स्वकीयलक्षणस्य सार्वदिकत्वाभावात्।

गान्धर्वरीत्या स्वीकारात्स्वीयात्वमिह वस्तुतः[9]

1 C omits किं वा.
2 स्वरूपगोपनम्।
3 पतिम्मन्येषु [गोपेषु]।
4 वास्तवगोपेषु।
5 पतिम्मन्यगोपेषु।
6 UN, p. 9.
7 श्रीकृष्णे पाणिग्रहणरूपपतित्वं वास्तवं न स्यात्।
8 UN, p. 49. The full text is: करग्रहविधिं प्राप्ताः पत्युरादेशतत्पराः। पातिव्रत्यादविचलाः स्वकीयाः कथिता इह॥
9 UN, p. 52.

इति का त्या य नी व्रतपरासु वास्तवस्वीया[1]त्वस्वीकारेण परकीयासु स्वीया-त्वस्य वास्तवत्वास्वीकाराच्च। यथा नित्यैश्वर्यमयलीलायां श्री न न्द य शो दा-ब ल दे व श्री दा मा दीनां परिचारकतया श्री कृ ष्ण स्य सेव्यत्वं [85b] तथा श्री रा धि का दीनां शक्तित्वेन श्री कृ ष्ण स्य शक्तिमत्त्वम्[2]। यथा 5 नित्यनर[3]लीलायां[4] श्री न न्द य शो द योः पितृमातृत्वाभ्यां श्री कृ ष्ण स्य तदात्मजत्वेन तल्लाल्यत्वं, यथा श्री ब ल दे व स्याग्रजतया श्री कृ ष्ण-स्यानुजत्वेन तल्लाल्यत्वं, यथा श्री दा मा दीनां समगुणत्वादिना तुल्यतया श्री कृ ष्ण स्य तत्सखित्वं, तथा श्री रा धि का दीनां[5] परकीयायमानत्वेन श्री कृ ष्ण स्य प्रतीयमानजारत्वम्। प्रतीयमानजारत्वस्यान्यथाकरणे सर्वे-10 षामन्यथात्वं स्यात्। तेन नरलीलाया अन्यथात्वं स्यात्। तस्मात्[6] प्रतीयमानजारत्वं नित्यमिति। अत एव

अनुग्रहाय भक्तानाम्[7]

इत्यादि। व्याख्या। मानुषदेहो नैमित्तिकः। तादृशी क्रीडा निमित्तम्। एतद-न्यथात्वे तदन्यथात्वं स्यात्। अत एव जातप्राकट्यलीलाया नित्यत्वं, 15 निमित्तनैमित्तिकयोरनादित्वात्परस्परसापेक्षत्वात्।

विनापि यो ग मा या या कार्यमन्तिमवृत्तिजम्।
अवहित्थाविलसितमेतदेव भवेत्कचित्॥१२९॥

इति। यो ग मा या याः[8] प्रथमवृत्तेः पत्यादिसमाधानकारित्वम्। यथा

मायाकलिततादृक्स्त्री[86a]शीलनेनानसूयुभिः[9]

20 इत्यादि। द्वितीया यो ग मा या या वृत्ति र्ल लि त मा ध वे।

---

1 AD omit ॰स्वीया॰.

2 गोलोके।

3 D omits ॰नर॰.

4 वृन्दावने।

5 अप्राकृते तु परोढरमणीरतिरेव सर्वोत्तमा भूयसी श्रूयते, न तस्याः परोढाया अनौचित्यप्रवर्तितम्। व्रजवधूनां कृष्णै-कतानमानसत्वेन स्वपतिनिष्ठत्वाभावात्ते-षाञ्च मायाकलिततादृक्स्त्रीयानुशीलनेन तदसङ्गमादित्यलङ्कारकौस्तुभः।

6 C omits ॰नर॰.

7 BP, X. 33. 36ª. See *ante*, II. 65.

8 ABC omit ॰याः.

9 UN, p. 58.

तया[1] निषेवितो यस्तु मन्यन्ते राधिकादयः ।
वृत्त्या प्रथमया जुष्टास्तस्यास्तेन सुनिश्चितम् ॥१३०॥[2]

किञ्च ललितमाधवे श्री[3] व्रज लीलापुरलीलयोरेकत्वं योगमाययैव प्रत्यायितं वास्तवपृथक्त्वनिरसनेन। अत एव तयोरेकत्वनिमित्तानि 5 योगमाययैव कल्पितानि न वास्तवानि। अत एव नटीसूत्रधारयोर्बुद्धे-रन्यथात्वं योगमाययैव कृतम्। अन्यथा मुखरानुकारिण्या नट्यानु-कार्या ऽभिमन्युव्यूढाया अनुकार्यायाः श्रीराधाया अनुकार्येण श्रीकृष्णेन सहानुकार्यपरिणयोद्यमस्यानुकरणं न सम्भवति। अनुकार्याया मुखरायास्तदुद्यमाभावात्। स चानुकार्यपरिणयाभावात्। सूत्रधारस्य 10 नट्या वचनास्वादनेन तत्सदृशत्वं सुतरामायातमिति। अतः

श्रीनन्दनन्दनो व्रजाद्बहिर्मा क्रियताम्[4]

इति श्रीमहाप्रभुनिदेशेन श्रीविदग्धमाधवललितमाधव-योरेकनाटकत्वेनारब्धयोरपि पृथक्तया नाटकद्वयकरणस्यानुपप-[86b] त्तेश्च[5]।

15 गार्गी। णं अउरुव्वं वुत्तन्तं अण्णो कोवि जणो जाणइ।[6]

पौर्ण [मासी]। नहि नहि किन्तु मदुपदेशवशादेव केवलं[7] हरिराम जनन्यौ जानीतः।[8]

इति। अस्य प्रयोजनं द्वारकायां[9] राधिकादिप्रकाशविशेषरूपाणां

---

1 द्वितीयवृत्त्या।

2 ललितमाधवे योगमायाया द्वितीया वृत्तिः। तया द्वितीयवृत्त्या निषेवितो जनः। तेन जनेन तस्या योगमायाया प्रथमया वृत्त्या जुष्टा राधिकादयो द्वितीयया वृत्त्या जुष्टाः सुनिश्चितं मन्यन्त इत्यर्थः।

3 C omits श्री०.

4 *Cf.* CC, कृष्णके बाहिर नाहि करह व्रज हैते, III. 1. 60.

5 C ०करणाच्च omitting ०स्यानुपपत्तेश्च.

6 The Sanskrit *chāyā* is एतमपूर्वं वृत्तान्तमन्यः कोऽपि जनो जानाति.

7 C omits गार्गी० केवलं.

8 LM, I. 48 with हरिरामयोर्जनन्यौ यशोदारोहिण्यौ.

9 C here inserts श्री०.

सत्यभामादीनां श्रीकृष्णेन सह परिणयस्य ताभ्या[1]मनुरोधेन जातत्वं न त्वन्यत्[2]। श्रीराधिकादिषु श्रीव्रजेश्वर्यादीनां स्नेहस्तु स्वाभाविक एव न तु व्रजे श्रीव्रजेश्वर्या च्या योगमाया द्वितीयवृत्तिसेवित-पादाः क्वापि[3], व्रजलीलापरिकराणां सदा द्वैरूप्याभावात्।[4] किञ्च। श्रीकृष्णस्य श्रीव्रजोत्पन्नत्वस्य यथा सदानुसन्धानं व्रजपरिकरेषु, तथा श्रीराधिकादीनां तस्य तत्तेषु[5]। एतदन्यथात्वं यत्तदनुकारि-गतं, न त्वनुकार्यगतम्[6]। यत्क्वापि तेषां योगमाया द्वितीयवृत्तिसेवितत्वं प्रतीयते तत्त्वनुकारिगतं न त्वनुकार्यगतम्। श्रीव्रजे तस्याः स्वाश्रये[7] लीनवृत्तितया निलीय स्थितत्वात्। किन्तु व्याख्याविशेषेण किञ्चित्कि-ञ्चिदनुकार्यगतार्थमविरुद्धमपि भवेत्। स यथा,

गार्गी। अज्जे सुदं मए तादमुहादो जं कण्णाणं भाविणा कन्तेण सङ्गमो विप्पओ[87a]अं उववादेदि।[8]

पौर्ण [मासी]। वत्से सम्यगिदमुक्तम्। तेन मयापि ते किशोरिकाशिरोरत्ने निरोद्धुम् अभिमन्युगोवर्द्धनयोर्जनन्यौ जटिलाभारुण्डे निर्बन्धेन नियुक्ते।[9]

इति। अत्र वत्से सम्यगिदमुक्तं तेन मयापि ते इत्यादि पौर्णमास्या वाक्यम्। श्रीकृष्णेन सङ्गमस्य तयैव प्रतिपादितत्वात्। अत एव ताभ्यां[10] तयो राधाचन्द्रावल्यो[11] र्निरोधस्य रसपोषणमेव प्रयोजनम्। अत एव समृद्धि-मति सम्भोगे ताभ्यां कृतं निरोधनं जातम्।

गार्गी। कहं दुवे सोअरे तुमं ण संघडेसि[12]

---

1 हरिरामजननीभ्याम्।

2 न तु व्रजे परिणयोऽयमप्रयोजनम्।

3 C क्वचित्.

4 पतित्वजारत्वद्वैरूप्याभावात्।

5 व्रजोत्पन्नत्वस्य सदानुसन्धानं व्रजपरि-करेष्विति।

6 यथार्थगतम्।

7 C °श्रय°. D annotates: मूलप्रकाशे प्रथमवृत्तिस्वरूपे.

8 The Sanskrit *chāyā* is: आर्ये श्रुतं मया तातमुखाद्यत्कन्यानां भाविना कान्तेन सङ्गमो विप्रयोगमुत्पादयति.

9 LM, I. 47.

10 जटिलाभारुण्डाभ्याम्।

11 BCD omit °राधाचन्द्रावल्यो°.

12 LM, I. 48. MSS. घडेसि for संघडेसि; the latter is preferable. The Sanskrit *chāyā* is: कथं द्वे सोदरे त्वं न संघटयसि.

इत्यत्र

पौ र्ण [मासी]। सदा सञ्चरतां दुष्ट कं स चराणां वितर्कशङ्कया[1]

इति पौ र्ण मा स्याः समाधानं बाह्यम्। रसपोषेच्छयेत्यान्तरमूह्यम्। अन्यथा कं स वधानन्तरं भगिनीतया मिलने सति[2] विपक्षताहाने रसपोषो
5 न स्यात्। रसपोषे सति विपक्षताममन्यमानान्प्रति

अपूर्वरसिकाः क्षितौ[3]

इत्याक्षेपस्य व्यर्थत्वं स्यात्।

हन्त[4] रा धा मा ध व योः पाणिबन्धं कं [87b] स भूपतेर्भयादभिव्यक्तमुदाहर्तु-मसमर्थो[5] नटता किरातराजमित्यपदेशेन बोधयन्धन्यः कोऽयं चिन्ताविक्लवां मामाश्वा-
10 सयति[6]

इत्यत्र रा धा मा ध व योः पाणिबन्धमित्यनेना ऽ भि म न्यु ना सह परिणयस्यावास्तवत्वमननं यत्तु यो ग मा या द्वितीयकार्यमिव। इवेत्यनुकरणादत एवानुकारिगतम्[7]। चिन्ताविक्लवां मामिति बाह्यम्। अन्यथा

15 कृ ष्णा पाङ्गतरङ्गितद्युमणिजासम्भेदवेणीकृते
रा धा याः स्मितचन्द्रिकासुरधुनीपूरे निपीयामृतम्।
अन्तस्तोषतुषारसम्प्लवलवव्यालीढतापोत्कया-
कान्ताः सर्व[8]जगन्ति सम्प्रति वयं सर्वोर्ध्वमध्यास्महे ॥१३१॥[9]

इत्यस्यानुपपत्तेः। किञ्च श्री व्र ज स्थानामनुकार्याणां न यो ग मा या-
20 द्वितीयवृत्तिसेवितत्वं यथानुकार्याया मु ख रा या यो ग मा या द्वितीय-वृत्त्यसेवितत्वम्।[10] तद्यथा

---

1 LM, I. 48.

2 राधाचन्द्रावल्यादीनां जटिलाभारुण्डा-दीनां परस्परमिलने सति।

3 UN, p. 254. The full verse is:
हरिप्रियजने भावा द्वेषाद्या नोचिता इह।
ये व्याहरन्ति ते ज्ञेया अपूर्वरसिकाः क्षितौ॥

4 C ननु.

5 सूत्रधारः।

6 LM, I. 21.

7 सदृशगतम्. C ॰कार्यमत एवानुकारि-गतम्.

8 A सप्त॰.

9 LM, I. 23 with कान्ताः in *d*.

10 ABD omit यथा॰ सेवितत्वम्.

रा धि [का]। हला ल लि दे पुप्फाहरणकोदूहलस्स णिएदादो तुए आणिज्जन्ती अहं अवि णाम अ[88a]ज्जाए मु ह रा ए दिट्ठम्हि ।[1]

ल लि [ता]। ण केअलं अज्जाए मु ह रा ए ज डि ला एवि ।[2]

मु ख [रा]। सबाष्पगद्गदम् । हा वच्छे सच्चं दारुणीए मए जालिदासि ।[3]

5 म धु [म ङ्ग लः]। सरोषम् । रुक्खसि वुड्ढिए दाणिं मा क्खु अलिअं पेम्मं पअडेहि जा क्खु घरोवन्तवाडिआपेरन्ते च्चेअ मं दिट्ठिअ कुक्कुरीव्व बुक्कसि ।[4]

मु ख [रा]। अज्ज म हु म ङ्ग ल किं करिस्सं । अप्पआसिदरहस्साए वञ्चिअम्मि भअवदीए[5] ।[6]

10 इति । तथा

य शो [दा]। च न्दा अ ली ण अ मा लि आ रा हा मा ह वी अ सव्वाओ मह आसाओ गुणसोरहपूरेण पूरेइ ।[7]

अत्राशा इति । यथा पुत्राशा श्रीकृष्णेन गुणसौरभेण पूर्णीकृता तथा कन्याशा आभ्यां[8] पूर्णीकृता इति । यथा

15 न सुतासि की र्त्ति दा याः[9]

इत्यादि । अत एवात्र व्रजेश्वरी तु न[10] योगमाया द्वितीय-वृत्तिसेवितपादा । किन्त्व तद्वञ्चनार्थ[11]मेव स्वयं योगमायया

---

1 The Sanskrit equivalent is: सखि ललिते पुष्पाहरणकौतूहलाय निकेतात्त्वयानीयमानाहमपि नामार्यया मुखरया दृष्टास्मि.

2 Sanskrit *chāyā* : न केवलमार्यया मुखरया जटिलयापि.

3 Sanskrit *chāyā* : हा वत्से सत्यं दारुणया मया ज्वालितासि.

4 Sanskrit *chāyā* : राक्षसि वृद्धे इदानीं मा खलवलीकं प्रेम प्रकटय या खलु गृहोपान्तवाटिकाप्रान्त एव मां दृष्ट्वा कुक्कुरीव बुक्कसि.

5 Sanskrit *chāyā* : आर्य मधुमङ्गल किं करिष्यामि । अप्रकाशितरहस्यया वञ्चितास्मि भगवत्या.

6 LM, IV. 25.

7 LM, I. 91. The Sanskrit *chāyā* is : चन्द्रावली नवमालिका राधा माधवी च सर्वा ममाशा गुण-सौरभपूरेण पूरयति.

8 चन्द्रा[वली]राधाभ्याम् ।

9 Cited in UN, p. 95. The rest is: किन्तु ममैवेति तथ्यमाख्यामि.

10 C omits तु न.

11 C °नार्थं°.

किञ्च। तदञ्जना[1]र्थमेव स्वयं यो ग मा य या प्रत्यायितं तद्विधानामुद्वाहा-
दिकमिति वि द ग्ध मा ध व गतं वाक्यं केनापि कल्पि[88b]तमित्यव-
गम्यते। यो ग मा या द्वितीयवृत्तिकार्यस्य ल लि त मा ध व एव वर्ण्य-
त्वात्। अत्रापि कं स वञ्चनमानुषङ्गिकम्। कं स भयस्यापि रसपोषनिमित्तो-
5 द्वाहार्थं श्री कृ ष्णे च्छावलिततया लीलाशक्त्या विरचितत्वात्। अन्यथा
कृ ष्ण प्रियाणां कं स ज्ञानाविषयत्वाच्च। रसपोषणन्तु प्रयोजनम्। अन्यथा
कं स वधानन्तरं यो ग मा या वैभवसङ्कोचे गोपकृतविवाहस्यावास्तवत्वज्ञाने
निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायादुपपत्नीभावाभिमानहान्या
रतेः समर्थात्वहानेः। यो ग मा या प्रत्यायितमूत्रपुरीषोत्सर्गादिरूपबीभत्स-
10 प्रत्ययोऽपि नरलीलासाधकत्वादप्रकटलीलागततया नित्यः। किमुत महाभाव-
साधकौपपत्यप्रत्यय इति।

यो ग मा या द्वितीयाख्यवृत्तेः सोपानबोधिनी।
वृत्तिस्तथापि लिखिता ह्यत्रेयं स्फुरणान्मया ॥१३१॥

किञ्च। समञ्जसाविषयस्यात एव पूर्णस्य श्री व सु दे व न न्द न स्य
15 समर्थाविषयस्यात एव पूर्णतमस्य श्री न न्द न न्द न स्य तथा समञ्जसा-
श्रयाणामत एव पूर्णानां स त्य भा मा दीनां समर्थाश्रयाणामत एव पूर्ण-
तमानां रा [89a] धि का दीनां पृथक्त्वेऽप्येकत्वप्रदर्शनेन ल लि त मा ध वे
पृथक्त्वेऽप्येकत्वांशांशित्वविरुद्धशक्तीनामुदाहरणं जातम्। तेन व सु दे व-
न न्द नो न न्द न न्द ना न्न भिन्नो न न्द न न्द न स्तु तस्माद्भिन्न इति च
20 सिद्धम्। तेन व सु दे व न न्द न स्य प्रकाशत्वं न न्द न न्द न स्य पूर्ण-
तमत्वे सिद्धं तत्तल्लक्षणार्थसिद्धेः। एवं रा धि का दीनां तत्तत्। किञ्च
श्रीरासलीलाया महाभावविलासरूपत्वम्। यथो ज्ज्व ल नी ल म णौ

कल्पक्षणत्वं यथा

शरज्ज्योत्स्नीरासे विधिरजनिरूपापि निमिषा-
25 दतिक्षुद्रा तासां यदजनि न तद्विस्मयपदम्।
सुखोत्सेकारम्भे निमिषलवकल्पामिव दशां
महाकल्पाकल्पाप्यहह लभते कालकलना ॥१३२॥[2]

1 C inserts here ॰ग्र॰.

2 Cited in UN, pp. 467-68.

तथा

> आद्यशब्दादिह प्रोक्ता कृष्णा विर्भावकारिता ।
> सम्भोगभेदे विस्पष्टं सा पुरस्तात्प्रवक्ष्यते ॥१३३॥[1]

**सम्भोगभेदे विस्पष्टकथनं यथा**

5 तासामाविरभूच्छौरिः[2] स्मयमानमुखाम्बुजः ।
> पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥१३४॥[3]

**श्रीदानलीलाया महाभावविलास[89b]रूपत्वम् । यथा तत्रैव । अ[4]त्रा-[5] योग्येपीर्ष्या[6] यथा श्री[5] दा न के लि कौ मु द्यां**

> विशुद्धाभिः सार्धं व्र ज हरिणनेत्राभिरनिशं
10 त्वमद्धा विद्वेषं किमिति व न मा ले रचयसि ।
> तृणीकुर्वत्यस्मान्वपु र प रिपोराशिखमिदं
> परिष्वज्यापादं महति हृदये या विहरसि ॥१३५॥[7]

इति ।

तटभुवि कृतकान्तिः[8]

15 **इत्यादिपद्यस्यार्थः । मनसि कमपि भाव[9]मित्यत्र कमपीति भावविशेषो दर्शितः । स च समर्था[10]रतिरूपः । ननु समर्थाया उपपत्नीभावाभिमान-त्वात्परोढात्वं निमित्तम् । अस्य[11] तु पुंस्त्वेन कथं स्त्रीत्वं 'तत्रापि परोढात्वं' श्री कृ ष्ण स्य तत्राप्युपपतिरूपस्य तस्य कथं विषयत्वमदृष्टत्वादश्रुतत्वाच्च ।**

---

1 UN, p. 471.
2 B adds इति after it omitting the rest of the verse.
3 BP, X. 32. 2.
4 AC त०.
5 मादने ।
6 D omits it.
7 DKK, 387.
8 Cited in BRS, p. 80. The full verse is as follows:
> तटभुवि कृतकान्तिः श्यामलायास्तटिन्याः
> स्फुटितनवकदम्बालम्बिकूजाद्दिरेफा ।
> निरवधिमधुरिम्णा मण्डितेयं कथं मे
> मनसि कमपि भावं काननश्रीस्तनोति ॥
9 See the last line of the verse quoted in footnote 8.
10 ABC ०र्थ०.
11 साधकस्य ।

तत्राह

अलौकिकपदार्थानामचिन्त्या शक्तिरीदृशी ।
भावं तद्विषयश्चापि या सहैव प्रकाशयेत् ॥१३६॥[1]

भावं समर्थारतिरूपं तद्विषयमुपपतिरूपं श्रीकृष्णम् । एवं

5 नित्यसिद्धस्य भावस्य प्राकट्यं हृ[90a]दि साध्यता[2]

इति । अस्यार्थः । नित्यसिद्धस्य भावस्य समर्थादिरतेः समर्थादिनिमित्तस्य परोढात्वादेरात्मनि सदा स्फूर्तेः । अत एव परोढात्वादिनिमित्तानां स्फूर्तिमयत्वात्साधकेषु स्नेहादीनां वैरल्यं लिखितम् । यथा[3]

प्रेम्ण एवं विलासत्वाद्वैरल्यात्साधकेष्वपि ।
10 अत्र स्नेहादयो भेदा विविच्य न हि शंसिताः ॥१३७॥

इति ।

आद्ये निरसने जाता यद्यप्येषा निराकृतिः ।
एतन्निरसनप्रौढे तुर्यं निरसनं कृतम् ॥१३८॥
प्रकाशने तृतीयेऽपि सिद्धदार्ढ्याय केवलम् ।
15 प्रथमे[4]ऽपि तृतीयाद्यं[5] प्रोक्तं निरसनद्वयम् ॥१३९॥

अत्र समर्थाया उपपत्नीभावाभिमानात्मतया पत्नीभावाभिमानात्मतया यद्द्वैरूप्यं तस्य विमतस्य खण्डनेन धामलीलाद्वैरूप्यरूपगम्य[6]स्पष्टविमतखण्डनं जातम् । इति चतुर्थनिरसनम् ॥

---

1 BRS(K), p. 8.
2 BRS(K), p. 3.
3 C तथा.
4 महाभावस्वरूपप्रकाशने ।
5 तृतीयचतुर्थम् ।
6 C omits ०गम्य०.

श्री रू प कृत्यग्रन्थाली विमतोपरभूरियम् ।
उप्तानि न विरोहन्ति तद्बीजानि कथञ्चन ॥१४०॥
विमतस्य निरासेन मतस्य स्फुरणं स्वतः ।
स्पष्टतार्थं तथाप्यत्र मतस्यापि प्रदर्शनम् ।१४१॥
5 विमतोत्थापनं पूर्वं ततो विमतखण्डनम् ।
मतप्रकटनञ्चान्त्यमिति[1] न्याय्यः क्रमः क्वचित् ॥१४२॥
क्वचिद्वर्णनसंक्षेपान्न पूर्वं ना[90b]न्तिमं क्वचित् ।
क्वचिदन्तिममत्रादौ[2] मध्यमन्तु ततः परम् ॥१४३॥

इति निरसनचतुष्टयं सम्पूर्णम् ॥

---

1 मतप्रदर्शनमालम् । 2 विमतखण्डनमादौ दर्शितम् ।

जीयाच्छ्री गौ र मार्तण्डो यत्कारुण्यद्युतेश्छटाः ।
श्रीरागाध्वविधिस्पर्शाविकरस्य प्रदर्शिका ॥१॥
स्पष्टस्य विमतस्यैव निरासेन कृता यदि ।
शुद्धता रागमार्गस्य तथापि पुनरुच्यते ॥२॥
5 विहायैकविधत्वञ्च[1] द्वैविध्ये संस्थितं तदा ।
त्रिविधं तत्कथं न स्यात्प्रत्येकं साधनं स्फुटम् ॥३॥
अतः साधनत्रैविध्यं स्पष्टादिविमतत्रये ।
प्रत्येकं तन्निरासाय निर्बन्धेन मयाधुना ॥
यत्किञ्चिल्लिख्यते तत्तु विचार्यं सूक्ष्मदृष्टिभिः ॥४॥

10 ## अथ साधनचतुष्टयम् ।

तद्भावलिप्सुना कार्या व्र ज लो का नुसारतः[2]

इत्यस्य व्र ज लो का नुसारं विना व्र ज लो क भावप्राप्तिर्नास्तीत्यर्थः । व्यतिरेकप्राप्त[3]मुदाहर्तुं रागानुगाप्रभेदकामानुगाव्यतिरेकप्राप्तमर्थमुदाहरामि । तेन साधनचातुर्विध्यं दर्शयामि । यथा श्री भ क्ति[4] र सा मृ त सि न्धौ

15 रिरंसां[5] सुष्ठु कुर्वन्यो विधिमा[91a]र्गेण सेवते ।
केवलेनैव स तदा महिषीत्वमियात्पुरे ॥५॥[6]

इति । रिरंसां श्री न न्द न न्द न विषयतत्सुखार्थरमणेच्छां सुष्ठु कुर्वन्निति समर्थानुकरणेनान्तर्दशायां सिद्धरूपेण रागानुगाप्रभेदरूपकामानुगायाः 20 सेवा दर्शिता । रागानुगाप्रभेदकामानुगाविहितसाधकरूपसेवाव्यतिरेकप्रदर्श-

---

1 रागसाधनम् ।
2 BRS(K), p. 11.
3 रागानुगायाः भिन्नप्राप्तत्वम् ।
4 ABD omit °भक्ति°.
5 B only retains रिरंसाम् adding इति after it, and omits the rest of the verse.
6 BRS(K), p. 11.

नोदाहरणरूपत्वादस्याः कारिकायाः[1]। अतो यो बाह्यदशायां साधकरूपेण सेवते[2] किमुतान्तर्दशायां वैपरीत्येन सिद्धरूपेण केवलेन विधिमार्गेण स्पष्टविमतसेव्यकल्पितसमञ्जसानुसारिमार्गेणाप्रकट गो कु ले समञ्जसामार्गानुसारेण समञ्जसाश्रयनित्यरूपधामद्वयगत[3]नित्यपरिकरविशेषसेव्यमानतद्रूपमार्गानुसारिमार्गेण वा पुरे तत्तदनुसारं विना वैधभजनमार्गाधिकारिसाधकोचितशास्त्रशासनमयमार्गेण वा सेवते। स पुरे द्वा र का यां महिषीत्वमियान्न तु श्री[4] व्र जे वाञ्छितमपि व्र ज दे वी त्वम्। यस्तु स्पष्टविमतसेवी समञ्जसाविषयं श्री कृ ष्णं प्राप्य[9।b]त्वेन निश्चित्य समर्थाविषयस्य तस्य साधकरूपसिद्धरूपाभ्यां किमुत केवलेन साधकरूपेण सेवते तत्साधनतया करोति[5]। तस्यान्तर्वैधी[6] भक्तिरेव स द्वा र कां प्राप्नोतीति किं वक्तव्यम्। यस्य स्पष्टविमतिनोऽन्तर्बहिरपि समञ्जसानुगासा[7]लक्षण्यं स द्वा र कां प्राप्नोतीति किं वक्तव्यं स्पष्टविमतिनो गौणसमञ्जसानुगासालक्षण्याधिक्याद् गो लो क प्राप्तिरपि केवलेनेत्यनेनैवकारेण च मिश्रेण चेत्तदा म थु रा यां महिषीत्वमियादिति दर्शितम्। मिश्रत्वम् समर्थाचेष्टानुकरणसम्पर्कात्। म थु रा म ण्ड ल प्रभेदसम्बन्धतो द्वा र कागतपरिकरतः स्वल्पैश्वर्यानुसन्धानेनैतद्गत[8]परिकरप्रेमोत्कर्षात्[9]। म थु रागतसमञ्जसापरिकरानुसारेण म थु रा प्राप्तिरेव। मथुरायां महिषीत्वसद्भावस्तत्र निर्णीतपूर्णतरत्वस्य पतित्वोपपतित्वाभ्यां नायकपण्णवति-

1 रिरंसामित्यस्याः।
2 BCD omit it.
3 मुख्यसमञ्जसा गौणसमञ्जसा।
4 D omits it.
5 समर्थानुकरणं सिद्धरूपेण साधनतया करोति।
6 B तद्वैषी॰.
7 B omits ॰सा॰.
8 मथुरागत॰।
9 BC add after ॰त्: साधकरूपेण व्रजलोकानुसारत इति साधकरूपस्य यथास्थितदेहरूपत्वेऽपि स्वस्य पुंस्त्वादिभावना श्रीकृष्णादेरैश्वर्यभावना निरस्ता। ततस्तुर्यवैलक्षण्यगतसिद्धान्ताविरोधः. But the same text is found below with reference to the context: सेवासाधकरूपेण॰ (See p. 151, ll 13-15). It seems to be a case of repetition due to scribal mistake.

भेदापपत्तेः[1] । अतोऽन्तर्बहिःसिद्धसाधकरूपाभ्यां रागानुगायाः श्री व्र ज प्राप्तिर्निश्चिता ।

विराजन्तीमभिव्यक्तं व्र ज [92a]वासिजनादिषु ।
रागात्मिकामनुसृता या सा रागानुगोच्यते ॥६॥[2]

5 इति लक्षिताया रागानुगायाः साधकसिद्धरूपाभ्यां सेवा[3]रूपत्वेन द्वैविध्यात् । तद्द्वैविध्यं यथा

सेवा साधकरूपेण सिद्धरूपेण चात्र हि ।
तद्भावलिप्सुना कार्या व्र ज लो का नुसारतः ॥७॥[4]

इति । अस्यार्थः । साधकरूपेण यथास्थितदेहेन व्र ज[6] लो का नुसारतः
10 सेवायां सत्यां सिद्धरूपेणान्तश्चिन्तितस्वाभीष्टसेवोपयोगिदेहेन व्र ज लो का-नुसारतः सेवा यदि स्यात् । यदि सिद्ध[92b]रूपेण व्र ज लो का नुसारतः सेवायाश्च[7] सत्यां साधकरूपेण व्र ज लो का नुसारतः सेवा स्यात्तदा द्वैविध्यस्याप्रयोजकत्वम् । साधकरूपेण व्र ज लो का नु सारत इति साधकरूपस्य यथास्थितदेहरूपत्वेऽपि स्वस्य पुंस्त्वादिभावना श्री कृ ष्णा देरैश्वर्य-
15 भावना निरस्ता । ततस्तुर्यवैलक्षण्यगतसिद्धान्ताविरोधः[8] । यदि[9] साधकरूपेण व्र ज लो का नुसारतः सेवयैकया श्री व्र ज लो क भाव[10]प्राप्तिः स्याद्-

---

1 पूर्णतरस्य कृष्णस्य कुब्जायामुपपतित्वं 'भावयोगात्तु सैरिन्ध्री परकीयैव सम्मते-त्युक्तेः । रुक्मिण्यां पतित्वं॰ रुक्मिण्या सहितो विभुरिति गोपालतापन्युक्तिः ।

2 BRS(K), p. 9. B omits व्रज-वासिजनादिषु॰ रागानुगोच्यते.

3 BD add ॰साधक॰.

4 BRS(K), p. 11.

5 C omits it.

6 C omits ॰सेवोपयोगिदेहेन.

7 ABD ॰यां.

8 साधकताटस्थ्यगतवैलक्षण्याविरोधः ।

9 ननु साधकरूपेणैकया सेवया कायेन गुरुपादाश्रयमात्रेणैव रागात्मिकानुसारतः स्वाभीष्टसिद्धिर्भविष्यति' किं वा सिद्धरूपेणैकया सेवया मानसी व्रजलोकानुसारेण पुनः कायवचनेन स्वाभीष्टसिद्धिर्भविष्यत्येव । किं तत्र देहत्रयविचारेण यथास्थितदेहात्साधकरूपपृथक्चननेन वा किं प्रयोजनमित्यत्राह यदीति ।

10 C omits ॰भाव॰.

यदि सिद्धरूपेण व्र ज लो का नुसारतः सेवयैकया श्री व्र ज लो क भाव-[1] प्राप्तिः स्यात्तदा साधकरूपेण सिद्धरूपेण च व्र ज लो का नुसारतः सेवा कार्येत्युपदेशस्याप्रयोजकत्वं स्यात्। सिद्धरूपस्वीकारः[2]। अन्यथा रागानुगानुपपत्तेः। साधकरूपस्वीकारः। अन्यथा सर्वथा[3] व्र ज लो का नुसारासिद्धेः[4]। साधनबाहुल्यासिद्धेश्च। तस्माद्यदि सिद्धरूपेण व्र ज लो कानुसारतः सेवायां सत्यामपि साधकरूपेण विधिमार्गेण सेवायाः श्री व्र ज-प्राप्तिर्नास्ति तदा साधकरूपेण व्र ज लो का नुसारतः सेवायां सिद्धरूपेण विधिमार्गेण सेवायाः श्री व्र ज प्राप्तिर्नास्तीति किं वक्तव्यमिति। सुष्ठु कुर्वन्नित्यस्य व्यतिरेकप्राप्तेनान्तर्विधिमार्गेण पूर्वोक्तेन बहिर्विधिमार्गेण केवलेन च न न्द न न्द न सुखार्थं व्र ज लो का नुसारं विना भजतां श्री कृ ष्ण स्य परमैश्वर्यानुभविनां गौणसमञ्जसानुसारिभजनवतां गो लो क प्राप्तिर्दर्शिता। द्वा र का दिद्वयसमञ्जसानुसारिभज[93a]नवतां तद्द्वयप्राप्तिरेव[5]। कल्पित-समञ्जसानुसारिसाधनवतां द्वा र का प्राप्तिर्न गो लो क प्राप्तिः[6]। गो लो क स्य गौणसमञ्जसाश्रयपरिकरधामत्वाद्भगवत्ताविशेषयोरैश्वर्यमाधुर्ययोः समञ्जसासमर्थयोश्च[7] क्रमेण वैधीरागानुगयोर्मूलत्वादिति।

वैधी रागानुगा चेति सा द्विधा साधनाभिधा[8]

इति साधनद्वैविध्येऽपि

व्र जे म धु पु रे द्वा र व त्यां गो ल क एव च[9]

इति प्राप्यस्थानानां चातुर्विध्याद्[10] यथोत्तरन्यूनत्वाच्च साधनचतुष्टयं न्याय्यम्।

---

1 C ॰लोकानुभव॰.

2 साधकस्य सिद्धरूप इत्येकसंज्ञास्वीकारः।

3 BD omit it.

4 नित्यसिद्धानां गोस्वामिपादानामपि साधकायमानत्वस्वीकाराद्विल्वमङ्गलोत्कलिकादिकृतोपदेशानुसारेण बाहुल्यदर्शनात्तदसिद्धेश्च दोषः स्यादित्यतः।

5 द्वारकामथुराप्राप्तिः।

6 C omits ॰र्न गोलुकप्राप्तिः.

7 ABC समर्थासमञ्जसयो॰.

8 BRS(K), p. 3.

9 LBA, p. 3.

10 D ॰विध्यात, and after it inserts: साधनचातुर्विध्यं दर्शितम्। ननु रिरंसां सुष्ठु कुर्वन्नित्यनेन रागानुगा चेत्तदा तदधिकार॰. But this is found within brackets probably as an indication of redundance. It relates to the discourse below (See p. 153, ll. 5-6).

तत्र[1] समञ्जसायास्तारतम्येन त्रिविधं वैध्यं गो लो का दिस्थानत्रयप्रापकम्।

'विराजन्तीमभिव्यक्तम्'[2]

इत्यादेः समर्थाया एकत्वेन रागानुगमेकं व्र ज प्रापकमिति चतुर्विधम्। तारतम्यन्तु माधुर्यन्यूनाधिक्यकृतमिति। अत्र[3] तु न न्द न न्द न विषय-
5 रमणेच्छां कुर्वतामपि चातुर्विध्यात्साधनचातुर्विध्यं दर्शितम्। ननु रिरंसां [93b] सुष्ठु कुर्वन्नित्यनेन रागानुगा चेत्तदा तदधिकारहेतुर्लोभो जात एव।

यत रागानवाप्तत्वात्[4]

इति वचनात्[5]। लोभस्य लक्षणं

तत्तद्भावादिमाधुर्ये श्रुते धीर्यदपेक्षते।
10 नात्र शास्त्रं न युक्तिञ्च तल्लोभोत्पत्तिलक्षणम् ॥८॥[6]

इत्यैश्वर्यानुसन्धानरहितकेवलमाधुर्यानुभवहेतुकलोभे शास्त्रयुक्त्यपेक्षा नास्त्येव। अतो बहिः साधकरूपेण विधिमार्गः कथं सम्भवेत्। विधिमार्गश्चेत्कथं लोभः। लोभो न चेत्कथं रागानुगा। तत्राह। लुब्धस्तावल्लोभ्यश्री व्र ज लो क भावरूपवस्तुप्राप्त्यर्थमुपायमनुसन्दधाति। लोभ्यस्य तस्य
15 दुर्लभत्वादुपायस्य ज्ञानार्थं तत्प्रज्ञं[7] भजते। स[8] ऐश्वर्यानुसन्धानरहितकेवलमाधुर्यानुभवी जात व्र ज लो क भावो वा रागानुगासाधनपरो वा[9] कृ ष्ण तद्भक्तकारुण्यमात्रलब्धसङ्गो वा[10] रागानुगास्वरूपमुपायमुपदिशति। स च तेनोपायेनान्तर्बहि र्व्र ज लो का नुसाररूपेण निजाभीष्टव्रजलोकभावं प्राप्नो[94a]ति। स चोपदेष्टा कृ ष्ण तद्भक्तकारुण्यलाभमात्रलब्धसङ्गश्चेन्न
20 भवति। तदा तं विहाय पुनस्तु कदाचित्तद्प्रज्ञं माधुर्यानुसन्धानरहितं केवलै-

1 साधनचतुष्टये।
2 BRS(K), p. 9.
3 D पद्येऽत्र. D comments: रिरंसामित्यादी.
4 BRS(K), p. 3.
5 C omits साधनचातुर्विध्यं दर्शितं॰ वचनात्; B omits वचनात्.
6 BRS(K), p. 10.
7 C ॰प्रसङ्गं.
8 उपदेष्टा।
9 C omits it.
10 C omits कृष्णतद्भक्त॰ सङ्गो वा.

श्वर्यानुभविनं जातवैधभावं वा वैधीमार्गपरं वा रागानुगामिश्रपरं[1] वोपगच्छति। तेनोपदिष्टं तेनाभ्यस्यमानं वा वैधीमार्गमनुसरति। तस्यान्ततस्तद्भावादिमाधुर्यश्रवणहेतुकलोभोत्पादितत्प्रश्नसङ्कलध ब्र ज लो का नुसारेणान्त-[2]स्तदनुवृत्त्या[3] तत्तल्लीलास्वादनेन रागानुगा नास्त्येव। अतो बहिर्वैधीमार्गानु-
5 सरणेन साधकजनेष्वजातभावत्वेन बहिः साधनस्याधिक्यात्[4] प्राबल्याच्च द्वा र का प्राप्तिस्तस्य श्री गो स्वा मि पादैर्निश्चिता। तस्या[5] ऐश्वर्यप्रधानत्वेन वैधीप्रधानभक्तिस्थानत्वाद्वाञ्छायां सत्यामपि साधनस्यान्यथात्वेन वाञ्छितस्याप्राप्यत्वम्। यथा

यद्वाञ्छया श्रीर्ललनाचरत्तपो
10 विहाय कामान्सुचिरं धृतव्रता[6]

इति। ननु

कृ ष्ण तद्भक्तकारुण्य[7]लाभमात्रैकहेतुका।
इयं रागानुगा कैश्चित्पुष्टिमार्गतयोच्यते ॥६॥[8]

इत्यनेन श्री कृ ष्ण तद्भक्तकारुण्योत्पादिततत्तन्माधुर्यानुभवजलोभे सत्य-
15 [94b]पि कथं पूर्वोक्तं तत्त[9]त्सम्भवेत्। अन्यथा तत्तत्कारुण्यस्याप्रयोजकत्वम्। यदि च श्री कृ ष्ण तद्भक्तकारुण्ये तारतम्यं मन्यसे तन्न सम्भवेत्[10]। रागानुगाया न न्द न न्द न विषयत्वेन न न्द न न्द न तद्भक्तकारुण्यैकहेतुकत्वात्। तत्राह। अन्तर्बहिश्चेद् ब्र ज लो कानुसारस्तदा कृ ष्ण तद्भक्तकारुण्यमात्रलाभो मन्तव्यः। अन्यथा न · फलाभावात्[11]। कृ ष्ण प्रेष्ठस्वल्पा-
20 पराधेन तादृग्जनोपगमनतदुपदिष्टतदभ्यस्यमानतादृङ्मार्गानुसरणादिभिः साध-

---

1 C omits वा रागानुगा॰ परं.
2 मनोवृत्तौ।
3 C omits ॰तत्प्रश्नसङ्क॰ वृत्त्या.
4 यथास्थितदेहकृतसाधनस्याधिक्यमननात्।
5 द्वारकायाः।
6 BP, X. 16. 36$^{c\text{-}d}$.
7 B omits the rest of the verse after this.
8 BRS(K), p. 11 with मात्रलाभैकहेतुका in *b* and पुष्टिमार्गतया कैश्चिदियं रागानुगोच्यते in *c-d*.
9 मनसि तत्तद्भावादियुक्तेऽपि बहिर्वैधत्वेन द्वारकाप्राप्तिः किञ्चिन्मिश्रणेन मथुराप्राप्तिरिति।
10 C omits अन्यथा॰ तन्न सम्भवेत्.
11 रागानुगाया अभावात्।

नस्य न्यूनजातीयता कृष्णतद्भक्तकारुण्यमात्रलब्धान्तर्बहिर्व्रजलोकानुसरतोऽपि सम्भवेत्। तथा हि[1] श्रीरसामृतसिन्धौ[2]

भावोऽप्यभावमायाति[3] कृष्णप्रेष्ठापराधतः।
आभासताञ्च शनकैर्न्यूनजातीयतामपि ॥१०॥[4]

5 इति श्रीकृष्णप्रेष्ठापराधाद्रागानुगीयस्य भावस्याप्यभावः। तत्साधनस्य न्यूनजातीयत्वे को विस्मयः। साधनं तावत्फलबीजं साधनवैषम्यात्फलवैधर्म्यं बीजानुरूपफलादिदर्शनात्। साधनं तावन्मार्गा[95a]नुरूपप्राप्यपत्तनादिप्राप्तिवत्। साधनानुरूपश्रीकृष्णप्राप्तिः समुचिता। ननु भाववतो जनस्य कथं श्रीकृष्णप्रेष्ठापराधः सम्भवेत्। श्रीगोस्वामि-
10 पादैस्तु प्रवर्तजनभयोत्पादनाय दर्शितः सः। तत्राह। श्रीरामप्रियस्य श्रीद्विविदस्य[5] श्रीलक्ष्मणापराधेनासुरभावप्राप्तिरिति प्रसिद्धेति। किञ्च। व्रजलोकानुसारतः साधकरूपेण सिद्धरूपेण च सेवा प्रत्येकं त्रिधा कायिकी वाचिकी मानसीति। किन्तु हेयोपादेयज्ञानार्थं तटस्थतया सिद्धान्तशास्त्रास्वादनं तत्तज्ज्ञापनार्थं तत्तया[6] त[7]दध्यापनञ्च। वैधी भक्तिः पञ्चम-
15 पुरुषार्थप्रभेदरूपापि रागानुगा[8]श्रितैर्हेया। यथा

अपि त्यक्त्वा लक्ष्मीपतिरतिमितो[9] व्योमनयनीम्[10]

इति। अस्यार्थः। लक्ष्मीपतिरैश्वर्यप्रधानः श्रीकृष्णप्रकाशः। तत्र रतिं वैध[11]भक्तिम्। व्योमैश्वर्यप्रधानं स्थानम्। किञ्च[12] नित्यादिकर्म-

1 B तत्राह.
2 C omits अन्यथा न फलाभावात्॰ रसामृतसिन्धौ.
3 B omits the rest of the verse after this.
4 BRS(K), p. 14.
5 वानरस्य।
6 तटस्थतया।
7 शान्तस्य।
8 ABD omit ॰नुगा॰.
9 B ॰रतिम्, and omits the next portion of the line.
10 SA, p. 28. The next line is व्रजे राधाकृष्णौ स्वरतिमणिदौ त्वं भज मनः.
11 ABC वैधी॰.
12 ननु चेत्तटस्थतयैश्वर्यानुसन्धाने कृते रागानुगायां वैधीमिथा न भवति। तदा तटस्थतया नित्यनैमित्तिकाद्याचरणेऽपि वैष्णवानां शुद्धभक्तानां कर्ममिथा न भवतीत्यत्र व्यवस्थामाह किञ्चेति।

मदिरा वैधी[1] भक्तिर्गोमूत्रं [95b] रागानुगा भक्तिर्दुग्धम्। यथा गोभवत्वे गोमूत्रदुग्धयोः सालक्षण्यं तथा पञ्चमपुरुषार्थत्वे वैधीरागानुगयोः समानलक्षणत्वम्। यथा मदिराबिन्दुनापि स्पृष्टं गोमूत्रं दुग्धञ्च मदिरातुल्यं सदस्पृश्यं भवति तथा नित्यादिकर्मणा स्पृष्टा वैधी रागानुगा च कर्मसदृशी 5 सती यदुपेक्षणीया स्वाधारा भवति। यथा गोमूत्रसम्पृक्तं दुग्धं पानानर्हतया हेया तथा वैधीसम्पृक्त[2]रागानुगा श्री न न्द न न्द न प्राप्त्यनर्हतया हेया। हाला[3]न्तं ब्रह्मवर्चसमिति न्यायात्। यथा मदिराबिन्दुसम्पृक्तदुग्धपानेन ब्राह्मणत्वाद्भ्रंशस्तथा स्वल्पकर्मसम्पर्केणानन्यवैष्णवत्वाद्भ्रंश इति।

लोभाद्वैध्या अनुष्ठानान्न हि रागानुगा फलम्।
10 लोभाद्गोमूत्रपानेन न स्याद्दुग्धफलं यथा ॥११॥

यथा ज्ञानसिद्धावस्थवैधभक्त्याधिकारहेतुश्रद्धयोस्तुल्यत्वम्। यथा रौप्यषोडशमुद्रास्वर्णकमुद्रयोस्तुल्यत्वम्। तथा [96a] हि

यथा विधिनिषेधौ[4] तु मुक्तं नैवोपसर्पतः।
तथा न स्पृशतो रा मो पासकं विधिपूर्वकम् ॥१२॥[5]

15 इति। किन्तु जातिभेदोऽस्त्येव। एवं वैधभक्तिसिद्धावस्थारागानुगाधिकारहेतुलोभयोस्तुल्यत्वम्।

वैधभक्त्यधिकारी तु भावाविर्भावनावधिः।
अत्र शास्त्रं तथा तर्कमनुकूलमपेक्षते ॥१३॥[6]

इति वचनात्। यथा वैधभक्तिसिद्धस्य वैधभक्त्य[7]ङ्गाकरणान्न दोषोऽनधि-20 कारादेवं जातलोभस्य वैधभक्त्यङ्गाकरणान्न दोषोऽनधिकारात्। जातिभेदोऽस्त्येव[8]। ननु श्री रा धि का दिभिर्व्रतादिकं कृतम्। यथा

---

1 D वैध°.

2 AD °क्तं.

3 हाला हलिप्रिया मद्यमित्यमरः। The actual reading in AK (*Śūdravarga*, 39) is सुरा हलिप्रिया हाला.

4 स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित्।
सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ॥

5 BRS, p. 45 as attributed to *Agastyasaṃhitā*. B omits तथा ॰ विधिपूर्वकम्.

6 BRS(K), pp. 10-11.

7 C ॰भक्त्या॰.

8 वैधभक्तिसिद्धस्य लोभस्य तुल्यत्वेऽपि।

गो कु ले कृ ष्ण च न्द्र स्य सर्वापच्छान्तिपूर्वकम् ।
क्षीरलालित्यवृद्धयर्थं क्रियमाणव्रतादिकम् ॥१४॥[1]

इत्यादि । श्री न न्दा दिभिः श्री ना रा य णो पासनञ्च कृतम् । अतो रागानुगायां तत्तत्करण[2]मायातम् । तत्राह

5 यस्य यत्साधनं शास्त्रे निर्णीतं शास्त्रकर्तृभिः ।
तदर्थं प्रापयेत्तत्तमनभीप्सुं जनं बलात् ॥१५॥

तथा हि श्री द श मे

तेषान्तु देव्युपस्थानात्प्रत्यादिष्टाशिषा सह ।
प्रादुर्बभूव सि[96b]द्धार्थः सदारो हर्षयन् ह रिः ॥१६॥[3]

10 अस्य व्याख्या श्री वै ष्ण व तो ष ण्यां

तुशब्दो विशेषे देव्युपस्थानादन्येषां न प्रादुर्भवति ' देवान्देवयजो यान्ति[4] ' इत्यादेस्तेषां[5] पुनः प्रादुर्बभूव ' तेषु तदाराधनस्य लौकिकलीला[6]मय श्री कृ ष्ण प्रेमैक-विलासरूपत्वात । देव्या अपि तत्सम्बन्धेन[7] योग्यतालब्धेरिति भावः ।[8]

इति । अनेन साधकस्य व्र ज लो का नुसारतः साधने सिद्धरूपेणापि किमुत
15 साधकरूपेणान्याराधनं वैधाचरणञ्च निषिद्धं ' प्रेम्णोऽभावेनासिद्धत्वात् ।

नैवासिद्धः कदाप्यल्पां कुर्याच्छ्रीशाद्युपासनाम् ।
श्री न न्द न न्द न प्राप्तौ तस्या[9] नैव निमित्तता ॥१७॥

तटस्थरूपेणापि तन्न कर्तव्यम् ।

20 निमित्तावश एव स्यात्प्रवर्तो लोकसङ्ग्रहे[10] ।
निमित्ते तद्वशस्तस्मिन्स्थितः स्यादिष्टसाधके ॥१८॥

---

1 SA, p. 391.

2 देवपूजाकर्मनारायणाद्युपासनाकरणम् ।

3 BP, X. 56. 36.

4 BG, VII. 23c.

5 नित्यप्रियजनानाम् ।

6 BD omit ०लीला०.

7 कृष्णपरिकर[सम्बन्धेन] ।

8 VT on BP, X. 56. 26 (=X. 56. 36) with इत्यर्थः after प्रादुर्बभूव, तदाद्याराधन० for तदाराधन० and प्रेमरसैक० for प्रेमैक०.

9 उपासनायाः ।

10 अर्थाल्लोकानां धर्मस्थापनाय ।

यत्र रागेतिरागोऽत्र व्रज सिद्धजनाश्रयः ।
न साधकाश्रय इति वैध्यापातो निरस्यते ॥१९॥
श्रीमद्रूपपदाम्भोजरेणोर्याचे मुहुर्मुहुः ।
विधिमार्गस्य गन्धोऽपि न वै[1] स्वप्नेऽप्युपैतु माम् ॥२०॥

ननु साधकसिद्धरू[97a]पयोः किं वैलक्षण्यम् । तत्राह । साधकरूपेण

श्रीरूपमञ्जरि निजेश्वरयोः पदाब्ज-
सेवामृतैरविरतं परिपूरितासि ।
त्वत्पादपङ्कजगतौ मयि दीनजन्तौ
दृष्टिं कदा विकिरसि स्वकृपाभरेण ॥२१॥[2]

इत्यादिना श्रीरूपमञ्जर्यनुगतिप्रार्थना[3] कार्पण्यपञ्जिकोत्कलिकावल्लरि विलापकुसुमाञ्जल्यादिभिः श्रीरूपमञ्जर्यनुगत्या श्रीराधाकृष्णसेवायाः प्रार्थना श्रीराधाकृष्णलीलास्वादनानि च । सिद्धरूपेण श्रीरूपमञ्जर्या सह श्रीराधाकृष्णयोः स्मरणमयी सेवेति । ननु

नित्यगुणो वनमाली यदपि शिखामणिरशेषनेतॄणाम् ।
भक्तापेक्षिकमस्य त्रिविधत्वं वर्ण्यते तदपि ॥२२॥
हरिः पूर्णतमः पूर्णतरः पूर्ण इति त्रिधा ।
कृष्णस्य पूर्णतमता व्यक्ताभूद् गोकुलान्तरे ।
पूर्णता पूर्णतरता द्वारकामथुरादिषु ॥२३॥[4]
इति धामत्रये कृष्णो विहरत्येव सर्वदा ।[5]

इत्यादिना श्रीकृष्णतद्भक्तधाम्नां त्रैविध्यमायाति । कथं धामसाधनफलानां चातुर्विध्यं सिध्य[97b]ति । यत्राह । गोलोकस्य गोकुलवैभवरूपत्वात्तत्र श्रीकृष्णस्य पूर्णतमत्वमेव । तद्गतपरिकराणामपि तदनुरूपत्वम् । अत एव गोकुलगोलोकयोरैश्वर्यसालक्षण्यतया नित्यप्रियाणामुदाहरणे

1 A नैव.
2 B omits पदाब्ज॰ स्वकृपाभरेण.
3 A ॰प्रार्थनया.
4 BRS(K), p. 22. with लिख्यते for वर्ण्यते in verse 22.
5 LBA, p. 172. B omits इति त्रिधा ॰सर्वदा.

आनन्दचिन्मयरसप्रतिभाविताभिः[1]

इत्यादि पद्यं दत्तम्। अतश्चातुर्विध्येऽपि त्रैविध्यम्। ननु तर्हि द्वा र का-म थु रा भ्यां कथं गो लो क स्य न्यूनत्वम्। तत्राह। तस्मा[2]त्तयोर्माधुर्येणाधिक्यान्माधुर्यस्यैव प्रेमोत्पादकत्वान्माधुर्यमेवाधिक्यहेतुः। तथा हि
5 बृ ह द्भा ग व ता मृ ते[3]

तथापि तस्मिन्[4] परमेशबुद्धे-
र्वै कु ण्ठ लो का गमनस्मृतेश्च।
सञ्जायमानादरगौरवेण
तत्प्रेमहान्या स्वमनो नो तृप्येत् ॥२४॥[5]

10 तथा च

किमासनन्ते गरुडासनाय
किं भूषणं कौस्तुभभूषणाय।
ल क्ष्मी कलत्राय किमस्ति देयं
वागीश[6] किन्ते वचनीयमस्ति ॥२५॥

15 इति। माधुर्यं तावत्स्वर्णमुद्रासदृशम्। ऐश्वर्यं रजतमुद्रासदृशम्। चतुर्षु स्थानेषु श्री ना रा य णा द्रसोत्कर्षरूपायाः स्वयम्भ[7]गवत्ता च तन्मयपूर्णैश्वर्यपूर्णमाधुर्यवलितस्य गो कु ल स्य महत्त्वम्। यथा चतुर्विधेषु पुरुषेषु पूर्णरजत[98a]मुद्रापूर्णस्वर्णमुद्रायुक्तस्य पुरुषस्य[8]। ततो[9] म थु रा याः स्तन्मयपादोनैश्वर्यद्विपादमाधुर्यवलिताया न्यूनत्वम्। यथा रजतपादोनमुद्रास्वर्णार्धमुद्रायुक्तस्य पुरुषस्य पूर्वतः पुरुषात्[10] ततो[11]ऽपि तन्मयद्विपादैश्वर्यपादमाधुर्ययुक्ताया द्वा र का या न्यूनत्वम्। यथा रजतार्धमुद्रा-

1 BS. V. 37. The full verse is:
आनन्दचिन्मयरसप्रतिभाविताभि-
स्ताभिर्य एव निजरूपतया कलाभिः।
गोलोक एव निवसत्यखिलात्मभूतो
गोविन्दमादिपुरुषं तमहं भजामि ॥

2 गोलोकात्।

3 BC omit it.

4 नन्दनन्दने।

5 BBA, II. 4. 113.

6 गोविन्द।

7 C omits स्वयम्०.

8 महत्त्वम्।

9 गोकुलात्।

10 पूर्णमुद्राद्वययुक्तपुरुषान्न्यूनत्वम्।

11 मथुरातः।

स्वर्णपादमुद्रायुक्तस्य पुरुषस्य स्वानन्तरपूर्वपुरुषात्[1]। ततो[2]ऽपि चतुष्पादैश्वर्यवलितस्य तन्मयपादमाधुर्येणापि रहितस्य गो लो क स्य न्यूनत्वम्। यथा पूर्णरजतमुद्रायुक्तस्य स्वर्णपादमुद्रयापि रहितस्य पुरुषस्य स्वानन्तरपूर्वपुरुषात्। रजतपूर्णमुद्रावत्त्वे यथा प्रथमचरम[3]पुरुषयोः साम्यं तथा चतुष्पादैश्वर्ये गो कु ल गो ल क योः साम्यम्।[4] अत एवैश्वर्यापेक्षयैतयोः[5] साम्येनैक्यम्। ततो[6] गो लो के ऽपि श्री कृ ष्ण स्य पूर्णतमत्वम्। गो लो के सर्वकारण[7]कारणत्वं स्पष्टम्। व्र जे तु नरलीलाच्छन्नत्वाद्गूढत्वमिति। किञ्च। गो लो क गत ल क्ष्मी चयगतायां समर्थालक्षणव्यतिरेकातिशयवलितायामपि गौण्यां समञ्जसायां समर्थानुग्रहोऽस्ति। गो [98b] लो क स्य गो कु ल वैभवरूप[8]त्वात्। अन्यथा पूर्णतमैश्वर्यासम्भवात्।

तुर्ये[9]ऽप्यैश्यं पूर्णतमं समर्था व्र ज एव हि।
इत्यसङ्गत्यलङ्कारोदाहृतिः क्रियते बुधैः ॥२६॥

वैधोसम्पर्करहितगूढातिगूढविमतानुसारिभजनवतां विमतत्वेन त्यक्तसाधनादिद्वैविध्यस्य सङ्गादिप्रभावेण त्यक्तसाधनादिद्वैविध्ये सति व्र ज प्राप्तिरिति। तत्र साधनद्वैरूप्य[10]द्वैविध्यखण्डनेन स्पष्टादिविमतत्रयखण्डनं जातम्।

विमतं साधनगतं त्रिविधं स्यान्निराकृतम्[11]।
स्पष्टादि ह्यत्र पूर्वादिद्वयतुर्यप्रभेदयोः[12] ॥२७॥

---

1 पादोनरजतमुद्रास्वर्णार्धमुद्रायुक्तपुरुषान्न्यूनत्वम्।

2 द्वारकातः।

3 चतुर्थ०।

4 CD in annotation have a table which is as follows:

| | व्रजे | मथुरा | द्वारका | गोलोक | |
|---|---|---|---|---|---|
| माधुर्य | १) | ॥० | ।०॰ | ० | स्वर्ण |
| ऐश्वर्य | १) | ।॥० | ॥० | १) | रजत |
| | १೨ | ≡।॥० | ४॥० | १) | [रजत] |

(1 *svarṇa* = 16 *rajatas*)

5 गोकुलगोलोकयोः।

6 तस्मादैश्वर्यसाम्यात्।

7 C omits ०कारण०.

8 C omits ०रूप०.

9 गोलोके।

10 C omits ०द्वैरूप्य०.

11 C स्यात्तिरस्कृतम्.

12 पूर्वादिद्वयस्य प्रकाशनचतुष्टयस्य वैलक्षण्यचतुष्टयस्य च तुर्यप्रभेदौ कामानुगास्वरूपप्रकाशनसाधकरूपतटस्थरूपवैलक्षण्यगतौ तयोः।

लोभस्य दुर्लभत्वेन तदर्थं यत्नमाचरेत् ।
लोभे सति भवेद्रागानुगाभक्तयधिकारवान् ॥२८॥

श्रीमन्मुकुन्दानुगभक्तसङ्गः
सुदुर्लभः कोटिमहातिपुण्यैः ।
5 जातः सकृद्यस्य हि सोऽपि कर्ता
रागानुगामार्गविवेचनस्य ॥२९॥

इति साधनचतुष्टयं पूर्णम् ॥

अवकरास्तावदेकविंशतिः । तत्र रत्यवकरश्चतुर्विधः । धामावकरस्त्रिविधः । लीलावकरश्चतुर्विधः । साधनावकरश्चतुर्विधः । आलम्बनावकरो द्विविधः । 10 तत्राश्रया[99a]लम्बनावकरोऽपि द्विविधः । कालावकरोऽपि द्विविधः । योगमायावकर एकविध इति । निरस्तावकरतत्तदुत्कर्षास्तावन्त एव । स्पष्टविमतादा[1]ववकरनिरसनोत्कर्षप्रकाशने अप्रयोजके स्याताम् । महाभावावकरः स्वरूपावकरो महिषीरतिस्वरूपभूताभिमानसालक्षण्यस्वरूपभूताभिमानस्वरूपावकरः कात्यायनीव्रतपरकन्यकाततिरतिसालक्षण्यस्वरूपाव- 15 कर इति रत्यवकरस्य चतुर्विधत्वम् । प्राकृतस्थानसालक्षण्यरूपावकरः स्वीया[2]वस्थान गोलोक सालक्षण्यरूपावकरोऽप्रकट गोकुल सत्तारूपावकर इति धामावकरस्य त्रिविधत्वम् । मत्स्यादिलीलासालक्षण्यरूपावकरोऽप्रकट गोकुलेऽप्रकटलीलाविशेषसत्तारूपावकरः प्रकट गोकुलेऽपि जातप्राकट्यलीलातोऽप्रकटान्यलीलाविशेषसत्तारूपावकरो गोलोक गतलीलासा- 20 लक्षण्यैक्यरूपावकर इति लीलावकरस्य चतुर्विधत्वम् । चतुर्विधलीलावकरानुसारेण साधनावकरस्य चतुर्विधत्वम् । प्राकृतपरकीयात्वप्राकृतोपपति[99b]त्वसालक्षण्येनालम्बनावकरस्य द्विविधत्वम् । परकीयात्वमूलरागरहित कुब्जापरकीयात्वसालक्षण्येन पूर्वसालक्षण्येन[3] चाश्रयालम्बनावकरस्य द्विविधत्व-

1 आदिशब्दाद्गूढातिगूढविमतम् ।
2 C स्वकीया॰.
3 प्राकृतपरकीयासालक्षण्येन ।

मित्यालम्बनावकरस्य त्रिविधत्वम्। प्राकृतकालसालक्षण्यैकादश्यादिसालक्षण्येन च कालावकरस्य द्विविधत्वम्। नश्वरकार्यमायैक्येनैकेन यो ग मा यावकरस्यैकविधत्वत्। स्वकीयारत्यन्तिमावस्थासालक्षण्यं महाभावावकरः। स्वकीयारतिबीजसालक्षण्यं स्वरूपावकरः। अप्रकट गो कु ल सत्ताप्रकटलीलाविशेषसत्ता प्रकट गो कु ल प्रकटलीलान्यूनतोत्पादिका[1]। यथाप्रकट वै कु ण्ठ-
5 तद्गताप्रकटलीलाविशेषसत्ता प्रकट वै कु ण्ठ तद्गतलीलान्यूनतोत्पादिका। अप्रकट वै कु ण्ठ ना थ स्यावतारित्वात्[2]। प्रकट वै कु ण्ठ ना थ स्यावतारत्वात्[3]। अप्रकटलीलाविशेषस्य स्वरहस्यतासूचनेन प्रकटलीलान्यूनतासूचकत्वाच्च। अत एव सा[4] सा[5] तस्य[6] तस्या[7] अवकररूपा। मत्स्यादिलीलासालक्षण्य[8]स्यांशतासाधकत्वे[100a]नावकरत्वम्[9]। एकादश्यादिसालक्षण्य-
10 स्यात्यन्तकरत्वेनावकरत्वमन्येषामवकरत्वं स्पष्टम्। मतप्रदर्शनं स्पष्टादिविमतनिरसनमप्रकटलीलागतस्वकी[10]यात्ववादद्दुःशैलारोहणसोपाननिरसनमवकरनिरसनमुत्कर्षप्रकाशनमिति पञ्चार्था एकस्मिन्नेकस्मिन्प्रकरणेऽनुसन्धेयाः। किन्तु प्रथमवैलक्षण्यतृतीयवैलक्षण्ययोर्द्वितीयनिरसने च प्रत्येकं दशदशार्था[11] अनुसन्धेयाः। प्रत्येकमेषु प्रकरणेषु[12] स्पष्टविमतगूढविमतयोः
15 खण्डनात्[13]। विमतानां त्रिविधत्वेऽपि लीलावकराणां साधनावकराणां चतुर्विधत्वम्। मत्स्यादिलीलासालक्षण्यस्य स्पष्टविमतगूढविमतान्तर्भूतत्वेन

---

1 साधारणलोकादृश्यत्वायुगावसरद्वापरलीलावसरद्वापराभ्याम्।

2 कारणत्वात्।

3 मुख्यवादानुदाहार्यत्वात्।

4 अप्रकटगोकुलसत्ता।

5 अप्रकटलीलासत्ता।

6 प्रकटगोकुलस्य।

7 प्रकटलीलायाः।

8 मत्स्यादिलीलया सह नन्दनन्दनलीलाया एकता स्यादिति कस्यचिद्भ्रणितत्वम्।

9 अंशिनः।

10 C ॰गतस्वी॰.

11 मतप्रदर्शनं विमतनिरसनं सोपाननिरसनमवकरनिरसनमुत्कर्षप्रदर्शनम्। समर्थाया द्वैरूप्यखण्डनं' तेन धाम्ना द्वैरूप्यखण्डनं' तेन लीलाया द्वैरूप्यखण्डनं' तेनालम्बनादेर्द्वैरूप्यखण्डनं' तेन साधनगतन्तु तत्।

12 लयेषु।

13 C omits किन्तु प्रथमवैलक्षण्य॰ खण्डनात्॰.

तदपृथक्त्वात्। किञ्च। स्पष्टविमतेऽवकराः षोडश[1]। एकस्यावकरस्यापाते षोडशावकरापातः स्यात्। गूढविमते तृतीयधामावकरद्वितीयलीलावकर-द्वितीयसाधनावकरा[2] इत्यवकरत्रयम्। एकस्यावकरस्यापातेऽवकरत्रयापातः स्यात्। एवमतिगूढविमतेऽपि [100b] प्रतिविमतमेकस्यावकरस्य निरासे
5 सर्वावकरनिरासः स्यात्[3]। अवकराणां परस्परापेक्षत्वात्। अतिगूढविमते तृतीयलीलावकरतृतीयसाधनावकरावित्यवकरद्वयम्। किञ्च। द्वितीयवैलक्षण्ये द्वितीयतृतीयचतुर्थसोपानेषु चतुर्थरत्यवकर[4]निरसनं प्रथमरत्यवकरनिरसनं[5] प्रथमप्रकाशने द्वितीयरत्यवकरनिरसनं द्वितीयप्रकाशनेऽन्यत्र सर्वत्र स्पष्ट-विमतखण्डने[6] तृतीयरत्यवकरनिरसनमनुसन्धेयम्। रत्यवकरनिरसनेना-
10 लम्बनावकरनिरसनं स्यादालम्बनावकरनिरसनेन रत्यवकरनिरसनं स्यात्। प्राकृतकल्यादिसत्तारूपोऽप्येकः कालावकरः। अत एवैतदनुरूपवृक्षादिसत्ता-रूपोऽप्येकः स्थानावकरः। एतौ विमतत्रयगतौ। एतयोः खण्डनमधुना कदम्बादिषु निम्बत्वादिप्रतीतिर्जलादिषु स्थानादिप्रतीतिर्द्वापरे कलित्वादि-प्रतीतिरिति स्थानकालावकरावन्यथादृष्टिज्ञेयौ। रत्नवेद्यादृष्टिस्त्वदृष्टिषु
15 ज्ञेया। उपासनानिष्ठेषु किञ्चिद्दृष्टित्वम्। प्रे[101a]मवत्सु सम्यग्दृष्टित्वमिति।

श्री रू प र घु ना था ङ्घ्रिकञ्जसान्निध्यलब्धये।
विवृतं मयका यत्नाच्चतुष्टयचतुष्टयम्॥

इति चतुष्टयचतुष्टयं पूर्णम्॥

---

1 स्पष्टविमते रत्यवकरश्चतुर्विधः। प्राकृत-स्थानसालक्षण्यगोलोकसालक्षण्ये इति धर्मावकरद्विविधत्वम्। मत्स्यादिलीला-सालक्षण्यप्रथमावकरगोलोकगतलीलासा-लक्षण्यचतुर्थावकर इति लीलावकरस्य द्विविधत्वम्। द्विविधलीलावकरानुसारेण साधनावकरस्य द्विविधत्वम्। आश्रया-लम्बनद्विविधत्वं विषयालम्बन एक-विधत्वमित्यालम्बनावकरत्रिविधत्वम्। कालावकरस्य द्विविधत्वम्। योगमायाव-करस्यैकविधत्वमित्यवकराः षोडश।

2 अप्रकटगोकुलेऽप्रकटलीलाविशेषे द्वितीय-लीलावकरस्तदनुसारे द्वितीयसाधनावकरः स्यात्।

3 गूढविमत अप्रकटगोकुलसत्तारूप इति तृतीयधामावकरः। अप्रकटगोकुल अप्रकटलीलाविशेषसत्तारूपो द्वितीयलीला-वकरः। तदनुसारे द्वितीयसाधनावकरः स्यादित्यवकरस्य त्रिविधत्वम्। अति-गूढविमते प्रकटगोकुलेऽपि जात-प्राकट्यलीलातोऽन्यलीलाविशेषसत्तारूपा-वकरतृतीयलीलावकरस्तदनुसारे तृतीय-साधनावकर इत्यवकर एकविंशतित्वम्।

4 कात्यायनीव्रतपरकन्यकाततिरतिसालक्ष-ण्यरूपावकरश्चतुर्थरत्यवकरः।

5 महाभावावकरनिरसनम्। 6 AB ॰नेन।

श्रीमद्रूपकृतान्नौमि दिव्यग्रन्थान्वरान्सदा ।
येषां कृपामृते चित्तं विरोधाब्धौ निमज्जति ॥१॥

## अथ विरोधखण्डनम् ।

ननु योगमाया द्वितीयवृत्तेर्बहिरङ्गजनसमाधानकारित्वं त्वया दर्शितम् ।
5 तच्च श्रीकृष्णस्यौपपत्यस्य वास्तवत्वे सति भवेत् । तत्र[1] वास्तवत्वे किं प्रमाणम् । तत्राह श्रीराधिकादिषु श्रीकृष्णस्यौपपत्यं वास्तवं न चेत्तदा कथं सिद्धान्तकर्तृत्वेन तटस्थायमानेन श्रीशुकेन वास्तवपतित्वं हित्वा परदाराभिमर्षणदोषास्पर्शे परमेश्वरत्वं परमात्मत्वञ्च हेतुतया दर्शितम् । श्रीगोस्वामिपादैरपि

10 वर्तितव्यं शमिच्छद्भिर्भक्तवन्न तु कृष्णवत् ।°
रामादिवद्वर्तितव्यं न क्वचिद् रावणादिवत् ॥२॥[2]

इत्यादि सिद्धान्ततया दर्शयद्भिर्दोषखण्डने वास्तवस्वीयात्वमदर्शयद्भिः परकीयात्वस्य वास्तवत्वं दर्शितम् । [101b] औपपत्यस्य[3] वास्तवत्वेनैवोद्धवस्यैश्वर्यज्ञत्वेन सिद्धान्तार्हवचनस्य श्रीव्रजसुन्दरीषु परमभक्त्युद्रेकः । यथा
15

आसामहो चरणरेणुजुषामहं स्यां
वृन्दावने किमपि गुल्मलतौषधीनाम् ।
या दुस्त्यजं स्वजनमार्यपथञ्च हित्वा
भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥३॥[4]

---

1 उपपती ।

2 UN, p. 55. The full text is :
वर्तितव्यं शमिच्छद्भिर्भक्तवन्न तु कृष्णवत् ।
इत्येवं भक्तिशास्त्राणां तात्पर्यस्य विनिर्णयः ॥
रामादिवद्वर्तितव्यं न क्वचिद्रावणादिवत् ।
इत्येष मुक्तिधर्मादिपराणां नय ईर्यते ॥
C omits रामादिवद्वर्तितव्यं॰ वत्.

3 ABC omit ॰स्य.

4 BP, X. 47. 61. B omits चरण॰ विमृग्याम्.

इति। दुस्त्यजं स्वजनमार्यपथञ्चेति परोढात्वस्य वास्तवत्वम्। अत्र पूर्वार्धे हेतुमदर्थप्रतिपादनं परार्धे हेत्वर्थप्रतिपादनम्। हेतोरभावाद्धेतुमतोऽभाव इति न्यायादौपपत्यस्य नित्यत्वम्। औपपत्यस्य हेतुत्वं' तदभावे रागस्य परमेयत्ताहान्यासामुत्कर्षहानेः। अत एव

5 क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः[1]

इत्यत्र श्री रा धि का दीनां वास्तवपरकीयात्वेन व्यभिचारदोषस्पर्शसम्भावनां दर्शयित्वा दोषस्पर्शाभावे परमोत्कर्षे च परमात्मनि श्री कृ ष्णे रूढभाव[2] एव हेतुतया दर्शितः। रूढभावस्य चतुर्वर्गतिरस्कारेण सिद्धस्वरूपतया

10 यथा तरोर्मूलनिषेचनेन[3]

इत्यादिनाधर्मापाताभावेन च परमपुरुषार्थपरमविशुद्धतया पञ्चमपुरुषार्थत्वेन ख्यातस्य भक्तियोगस्य परमपरा[4]काष्ठाविधिरूपत्वात्। श्री रा धि[102a] का दीनां प्रथमपुरुषार्थविरुद्धायमानचेष्टितत्वेऽपि सूक्ष्मदृष्ट्या प्रथमपुरुषार्थसारायमाणचेष्टितत्वं' तासां परमशक्तित्वेन परमशक्तिमच्छ्री कृ ष्ण स्य

15 तेन चेष्टितेन परमसुखोत्पादनात्। अत एव तासां पूर्वतोऽपि कारणात्परमसुमर्यादत्वं किमुत परतः। यथा

स्वे स्वेऽधिकारे या निष्ठा स गुणः[5]

इत्यादि। किञ्च तत्तदनुसन्धानाभावा[6]द्रागप्राप्तत्वेन तत्[7]प्रच्छन्नत्वं[8] ' तेनासमञ्जसत्वं व्यक्तम्। अत एव

20 एताः परं तनुभृतो भुवि गोपवध्वो
गो वि न्द एव निखिलात्मनि रूढभावाः।[9]

---

1 BP, X, 47, 59[a]. See *ante*, I.37.
2 *Cf.* BP, X. 47. 59[b]: कृष्णे क्वचैष परमात्मनि रूढभावः.
3 BP, IV. 31. 14[a].
4 *sic*.
5 BP, XI. 20. 26[a-b].
6 कृष्णः शक्तिमान्' वयं शक्तय इत्याद्यनुसन्धानाभावात्।
7 ABD omit तत्.
8 ABD प्रच्छन्नं. D annotates परमसुमर्यादत्वम्.
9 BP, X, 47. 58[a-b].

इत्यत्र गोपवध्वो गोपैर्व्यूढा इति परोढात्वस्य वास्तवत्वं दर्शितम्। उ द्ध व स्य सिद्धान्तार्हवचनत्वात्। भुवीत्युपलक्षणमूर्ध्वाधोलोकयोः। तेन पट्टमहिषीचयान् म हा वै कु ण्ठा दिगत ल क्ष्मी चयाच्चोत्कर्षो दर्शितः। अत्र हेतु र्गो वि न्द एव निखिलात्मनि रूढभावा इति। निखिलात्मनि सर्वस्वरूप-
5 मूलभूते। रूढभावो महाभाव इति।

रागेणैवार्पितात्मानः[1]

इति परकीयात्वमूलस्य रागस्यावास्तवत्वं चेत्तदा परकीयात्वस्यावास्तवत्वं स्यात्। अतः [102b] परकीयात्वमूलतादृशरागाभावादेव प्राकृतक्षुद्र-नायिकानां मुख्यरसानर्हत्वम्। उपपतित्वमूलं तादृशराग एव। यथा

10 रागेणोल्लङ्घयन्धर्मम्[2]

इत्याद्युपपतित्वमूलतादृशरागाभावादेव प्राकृतनायके लघुत्वम्। यथा

लघुत्वमत्र यत्प्रोक्तम्[3]

इत्यादि। अतः श्री गो स्वा मि पादैः परोढाया लक्षणविशेषेऽपि

गोपैर्व्यूढाः[4]

15 इति लिखितं व्यूढायमाना इति न लिखितम्। एतदेव

मायाकलिततादृक्स्त्रीशीलनेन[5]

इत्यादिपद्ये पतिभिः सह सङ्गमं निराकुर्वद्भिः पतित्वनिराकरणाभावात्पतित्वस्य वास्तवत्वं स्थापयद्भिरसूयानिमित्तत्वेन पुनस्तदेव समर्थयित्वा केवल-मसूयानुत्पत्तित्वं दर्शयद्भिः पतित्वावास्तवत्वहेतु[6]मदर्शयद्भिस्तैरेव त[7]देवा-
20 त्यर्थं समर्थयित्वात्यर्थं समर्थितम्। अत एव

विशेषोक्तिः कारणेषु[8] सत्सु कार्यावचो मता[9](?)

---

1 UN, p. 52. See *ante*, I. 36.
2 UN, p. 12. See *ante*, I. 35.
3 UN, p. 14.
4 UN, p. 61 : गोपैर्व्यूढा अपि हरेः सदासम्भोगलालसाः.
5 UN, p. 58.
6 C here inserts ०त्व०.
7 पतित्वस्य वास्तवत्वम्।
8 परकीयात्वेषु।
9 D annotates : परकीयात्वेऽपि परमसतीत्वमित्यवचो मता(?)विशेषोक्तिः स्यात्।
*Cf.* *Alaṅkārakaustubha*, VIII, 23, which says : विशेषोक्तिः कारणेषु सत्सु कार्यस्य नोदयः.

इतिलक्षितविशेषोक्त्यलङ्कारोदाहणरूपं पद्यं श्री गो स्वा मि चरणैः प्रकटितम्। यथा

रागोल्लासविलङ्घितार्यपदवीविश्रान्तयोऽपि[1]

इत्यादि। अपिशब्दोऽत्र विरोधद्योतकः। द्वयो[2]रप्यर्थयोः [103a] स्वतःसम्भवित्वात्। एकस्य प्रत्यायितत्व एकस्य स्वतःसम्भवित्वे विरोधो नास्त्येव। त्रैलोक्यविलक्षणा इत्यनेन परकीयात्वादिवैलक्षण्यम्। अत एव श्री क वि रा ज गो स्वा मि भिर्विशेषोक्त्यलङ्कारोदाहरणरूपं पद्यं लिखितं यथा श्री गो वि न्द ली ला मृ ते

तृणीकृतत्यक्तकुलीननारी-
धर्मापि दूरोज्झितभर्तृकापि।
सती च याभीप्सितसच्चरित्रा
रा धा विधात्रारचि चित्रशीला[3] ॥४॥[4]

अत्र परोढात्वावास्तवत्वे विशेषोक्त्यसिद्धिः स्यादिति। कारण-कार्ययोर्द्वयोरपि स्वतःसम्भव्यर्थरूपत्वात्। अचिन्त्यहेतुरियम्[5]। किञ्च

गान्धर्वरीत्या स्वीकारात्स्वीयात्वमिह वस्तुतः[6]

इति कन्यानां वास्तवस्वीयात्वस्वीकारेण परकीयाणां वास्तवपरकीयात्वं दृढीकृतम्। औपपत्यस्यावास्तवत्वे केवलशक्तिमत्त्ववास्तवत्वात्तदनुरूपस्य श्री न न्दा दीनामनुव्रतत्वस्य वास्तवत्वेनौपपत्यानुरूपस्यापि पितृत्वादेरवास्तवत्वं स्यात्। तेन नरलीलाया अवास्तवत्वं स्यात्।

पतिम्मन्यो ऽ भि म न्यु कः

इत्यत्र [103b] पतिम्मन्यः पुंस्त्वाभावादेव न तु पतित्वावास्तवत्वादिति।[7] वै ष्ण व तो ष ण्या दौ

कश्चित्परकीयायमाणा

इत्यादिकं प्राकृतपरकीयात्वादिव्यावृत्त्यर्थम्। बहिर्मुखजनसमाधानार्थं यो ग-

1 Cited in UN, p. 52. See *ante*, III. 119.
2 निन्दारूपवन्दनरूपयोः।
3 C ॰लीला.
4 GLA, XI. 125.
5 विशेषोक्तिः।
6 UN, p. 52. See *ante*, II. 45.
7 नन्वेवं चेत्तर्हि गोस्वामिपादैः पतिरभिमन्युरिति कथं न लिखितं कथं वा पतिम्मन्य इति लिखितं तत्र कारणमाह।

मा या द्वितीयवृत्तिसेवितस्यैव वा तत्[1] । नन्वौपपत्यस्य वास्तवत्वे कथमागमायुक्तश्री रा धि का दिपरमशक्तित्वेन श्री कृ ष्ण परमशक्तिमत्त्वम् । तत्राह । यथा[2] पशुपा[3]ङ्गजत्वस्य वास्तवत्वेऽपि श्री कृ ष्ण स्यानादित्वं तथौपपत्यस्य वास्तवत्वेऽपि श्री रा धि का दीनां परमशक्तितया श्री कृ ष्ण स्य परमशक्ति-
5 मत्त्वम् । तथा हि

निवृत्तानुपयोगित्वाद्दुरूहत्वादयं रसः ।
रहस्यत्वाच्च संक्षिप्य विततांङ्गोऽपि लिख्यते ॥५॥[4]

अस्य व्याख्या[5] । निवृत्तानुपयोगित्वात्'

निवृत्तेषु प्राकृतशृङ्गाररससाम्यदृष्ट्या भागवतादप्यस्माद्रसाद्विरक्तेष्वनुपयोगित्वात् ।[6]

10 अनेन श्री कृ ष्ण स्यौपपत्ये श्री रा धि का दीनाञ्च परकीयात्वे प्राकृतौपपत्य-प्राकृतपरकीयात्वसाम्यदृष्ट्या दोषदृष्टिं कुर्वन्तो जना[7] मायावादिन इव[8] कामानुगाभक्तिनिरतजनै[104a]स्त्याज्याः । अन्यथापराधापातादित्यायातम् । दुरूहत्वादौपपत्यशक्तिमत्तयोः परकीयात्वशक्तित्वयोर्वास्तवत्वेन तर्कागोचरत्वाद्रहस्यत्वात् । कामानुगाभक्तिनिरतजनैकानुभवनीयत्वेनासर्वगम्यत्वात् ।
15 अनादिलीलाशक्त्यानादितया स्ववैभवेन सृष्टत्वादनादिलीलानिमित्ता ऽ भिम न्थ्या देर्नित्यत्वं शक्तित्वञ्च न्याय्यमेवेति न तु शक्तिमत्त्वं ' तत्तु श्री कृ ष्ण स्यैवेति । ननु श्री कृ ष्ण स्य व्र जे पतित्वमुपपतित्वञ्च द्वयोः' श्री कृ ष्ण स्य पूर्णतमत्वं श्री व्र ज दे वी मात्राणां समर्थारतिश्च । यथा

उदात्ताद्यैश्चतुर्भेदैस्त्रिभिः पूर्णतमादिभिः ।
20 द्वादशात्मा चतुर्विंशत्यात्मा पत्यादियुग्मतः ॥
नायकः सोऽनुकूलाद्यैः स्यात्षण्णवतिधोदितः ॥६॥[9]

अत्र चतुर्विंशत्यात्मा पत्यादि[10]युग्मत इति पूर्णतमस्य

---

1 वर्णनम् ।
2 C omits it.
3 नन्दा० ।
4 BRS (K), p. 70.
5 C omits अस्य व्याख्या.
6 DS on the said verse (V. 5). See BRS, p. 426.
7 स्वीयात्वपक्षाश्रितजना इति यावत् ।
8 यथा भागवतोत्तमैर्मायावादिनो जनास्त्याज्याः ।
9 UN, p. 40.
10 आदिशब्द उपपतिरिति ।

पतिश्चोपपतिश्च[1]

इति द्वौ भेदावायातौ ।

कृष्णस्य पूर्णतमता व्यक्ताभूद् गोकुलान्तरे ।
पूर्णता[2] पूर्णतरता द्वारकामथुरादिषु ॥७॥[3]

5 इति वचनाद् व्रज एव पूर्णतमत्वम् । तथा

साधारणी निगदिता समञ्ज[104b]सासी समर्था च ।
कुब्जादिषु महिषीषु च गोकुलदेवीषु च क्रमतः ॥८॥[4]

इत्यनेन परकीयाणां व्रजदेवीमात्राणां समर्थारतिरायाता । एतच्च पूर्वसिद्धान्तेन[5] समर्थितम् । पूर्वसिद्धान्तोऽनेन समर्थितश्च । तथा यदि
10 गोलोकस्य[6] गोकुल[7] वैभवरूपतया पृथक्स्थानता तदा मथुराद्वारकयोः कथं वैभवरूपतया पृथक्स्थानद्वयं न स्यात् । मथुरायां पूर्णतरस्य निर्धारितत्वान्मथुरायां पतिश्चोपपतिश्चेति प्रभेदावायातौ । द्वारकायां पूर्णत्वस्य निर्धारितत्वात्तत्रापि तौ[8] भेदावायातौ । मथुरायां तयोर्भेदयोः सम्भावना वर्तते रुक्मिण्यादीनामावरणरूपत्वात् ।
15 कुब्जायाः परकीयात्वेन स्थापितत्वाच्च । द्वारकायामपि तयोः सम्भावना वर्तते श्रीललितमाधवानुसारेण श्रीरुक्मिण्या पत्न्या सह विहरणात् नववृन्दावने परोढात्वाभिमानवत्या श्रीराधया सह विहरणाच्च । व्रजे तु तौ[9] भेदौ निर्णीतावेव । कात्यायनीव्रतपरकन्यानां स्वकीयात्वे स्थापितत्वादन्यासां परकीयात्वाच्च । किन्तु कुब्जायाः साधा-
20 रण्या रतेराश्रयत्वान्न तत्र कृष्णस्यौपपत्यं स्थापितमपि पूर्णतरत्वार्हम् । [105a] नववृन्दावने राधायां समर्थारतिविलासमादनस्य दर्शितत्वान्न तत्र कृष्णस्यौपपत्यं पूर्णतार्हं किन्तु पूर्णतमार्हम् । तत्तु त्वया दर्शित-

1 UN, p. 9. The full line is: पतिश्चोपपतिश्चेति प्रभेदाविह विश्रुतौ.

2 C omits व्यक्ताभूद्° पूर्णता probably through scribal mistake.

3 BRS(K), p. 22.

4 UN, p. 407.

5 उदात्तायैरिति (See *ante*, V. 6) ।

6 C गोकुल°.

7 C गोलोक°.

8 C द्वौ.

9 C द्वौ.

मेव। रतेर्जात्युत्कर्षादेवोत्कर्षः। न तु तं विना केवलस्थानोत्कर्षादुत्कर्षः। अन्यथा पूर्णतरत्वप्रकाश[1]स्थान म थु रा यां कु ब्जा या रतेर्महिषीरतितो न्यूनत्वं न स्यादिति[2] तत्राह। रतिस्त्रिधा समर्थासमञ्जसासाधारण्यः। 'कौस्तुभमणिचिन्तामणिमणिस्थानीया[3] इति जातिकृतभेदाः। तत्र कौस्तुभ-
5 मणिस्थानीयत्वेन पूर्णतमा समर्था रतिर्द्विधा। पूर्णतमा पूर्णा च। इमौ गुणकृतभेदौ। एवमन्यत्रापि[4]। व्र जे[5] पूर्णतमा। द्वा र का यां पूर्णा। चिन्तामणिस्थानीयत्वेन पूर्णा समञ्जसा रतिस्त्रिधा[6]। पूर्णा पूर्णतरा पूर्णतमा च।

समञ्जसायाः स्थानत्वात्पूर्णत्वं नियतं ह रेः।
10 द्वा र व त्यां मा थु रे तु पुरे तस्या समुन्नतेः ॥९॥
निश्चिता पूर्णतरता नियता श्री व्र जे सदा।
स्थानत्वाच्छ्रीसमर्थायाः श्रीपूर्णतमता मता[7] ॥१०॥

द्वा र का यां महिषीषु पूर्णा। म थु रा यामावरणस्थासु महिषीषु पूर्णतरा। व्र जे का त्या य नी व्रतपरासु कन्यासु पूर्ण[105b]तमा। मणि-
15 स्थानीया नातिपूर्णा साधारणी रतिस्त्रिधा। श्री व्र जे

व्योमयानवनिताः सह सिद्धैः[8]

इत्यादिना देवाङ्गनासु प्रसिद्धा पूर्णतमा। म थु रा यां पूर्णतरा कु ब्जा यां प्रसिद्धा। द्वा र का यां पूर्णा देवाङ्गनासु प्रसिद्धा। अत एव रति[9]भेदानुरूपनायक[10]भेदयोग्यत्वेन नायकप्रकरणे नायकषण्णवतिभेदोत्पत्तिः।

---

1 AC insert here ०न०.

2 ननु श्रीकृष्णस्य व्रज इत्यादिरतेर्महिषीरतितो न्यूनत्वं न स्यादित्यन्तं वादिवाक्यम्।

3 *cf.* UN, p. 407: 'मणिवच्चिन्तामणिवत्कौस्तुभमणिवत्त्रिधाभिमता.

4 कुरुक्षेत्रेऽपि।

5 C श्रीव्रजे.

6 C omits रतिस्०.

7 ABD परा.

8 BP, X. 35. 3ᵃ. The full verse is:
व्योमयानवनिताः सह सिद्धै-
र्विस्मितास्तदुपधार्य सलज्जाः।
काममार्गणसमर्पितचित्ताः
कश्मलं ययुरपस्मृतनीव्यः॥

9 C inserts here प्र०.

10 C inserts here प्र०.

उत्तमस्यापकर्षः स्यात्सङ्गेन न्यूनवस्तुनः ।
न्यूनस्यापि तथोत्कर्ष उत्तमेन प्रसङ्गतः ॥११॥

किञ्च

कु ब्जा दिषु महिषीषु गो कु ल देवीषु च क्रमतः[1]

इत्यत्र गो कु ल देवीषु दु र्गा व्रतपरकन्याचयपरतोऽन्यास्वित्यर्थः। दु र्गा-व्रतपरकन्यानां महिषीसाहित्यलिखितत्वात्। अन्यथा समञ्जसालक्षणानुपपत्तेश्च। व्र ज दे वी नां समर्थारत्याश्रयत्वम्। तासु दु र्गा व्रतपराणां स्वीयात्वेन समञ्जसाप्रायरत्याश्रयत्वम्। पूर्वं[2] सामान्यरूपमन्तिमं[3] विशेषरूपम्। अतः सामान्यविधितो विशेषविधिर्बलवानिति न्यायेन पूर्वं बाध्यम्। अत एव महिषीषु समञ्जसाया निर्णयेऽपि ल लि त मा ध वे स त्य-भा मा याः पूर्वावस्थायां समर्था रतिर्दर्शिता[4]। किञ्च[5]

अधिकाधिकयोर्यद्वत्पार्थक्यं[6] मिलनार्हयोः ।
पार्थक्यं[7] वस्तुनोरै[106a]क्यं स्वल्पयोस्तद्वदत्र[8] हि ॥१२॥

माधुर्यस्य पराधिक्यादैश्वर्यस्य च भूमतः ।
पार्थक्यं[9] व्र ज गो लो क गतं शास्त्रादिसम्मतम् ॥१३॥

इति। ननु

कन्या मुग्धैव सा किन्तु स्वीयान्योढे उभे बुधैः ।
मुग्धामध्यादिभेदेन षड्भेदे परिकीर्तिते ॥१४॥
मध्याप्रौढे द्विषड्भेदे प्रोक्ते धीरादिभेदतः ।
कन्या स्वीया परोढेति मुग्धा चेति त्रिधा मता ॥
इति ताः कीर्तिताः पञ्चदश भेदा इहाखिलाः ॥१५॥[10]

---

1 UN, p. 407. The first line is: साधारणी निगदिता समञ्जसासौ समर्था च.

2 व्रजदेवीमात्रेण समर्थाश्रयत्वम्।

3 धन्यादिकन्यानां समञ्जसाप्रायरत्याश्रयत्वम्।

4 इति द्वारकायां प्रकाशद्वयसम्भावना निरस्ता।

5 C omits it.

6 ABD ॰र्थिक्यं.

7 व्रजमथुराद्वारकासु।

8 ABD पार्थिक्यं.

9 ABD पार्थिक्यं.

10 UN, p. 132 with मुग्धा च त्रिविधा in *b*.

इत्यत्र कन्यानामेकभेदरूपतास्वीकारात्कथं समञ्जसाप्राया समर्थाप्रायेति रतेर्द्वैविध्यं मन्यसे। रतेर्द्वैविध्ये कन्यानां द्वैविध्यात्षोडश भेदा भवन्ति। कन्याः परकीया एव। स्वीयात्वे कासाञ्चित्स्थापनं यत्तदीषत्तारतम्यज्ञापनार्थम्। ईषत्तारतम्ये भेदो न स्यात्[1] किन्तु बहुतारतम्ये। अतः
5 षोड़श भेदा न कृताः। अतः परकीयाणां यदुत्कर्षवर्णनं तत्स्वीयात्वे स्थापितानां कन्यानामप्यायाति। तत्राह। कन्यानामनूढात्वेन परकीयात्वादेक एव भेदः। कासाञ्चिद्गान्धर्वरीत्या परिणयेन कन्यात्वहान्या स्वीयान्तःपातात्। अतो बहुतारतम्येन पतिप्रकरणे ताः[2] स्वीयात्वेन लिखिताः[3]। श्री व्र जे निर्णीत[4]पूर्णतमत्वस्य पतित्वोपपतित्वाभ्यां षण्णवति-
10 प्रकारत्वं [106b] नायकस्य प्रदर्श्य पुनः स्वीयाप्रकरणे स्वीयात्वेन लिखिताः। पुनः परकीयाप्रकरणे विवाहस्याव्यक्तत्वेन परकीयालक्षणं विषयीकृत्य पश्चाद्गान्धर्वविवाहमनूद्य महाभावाश्रयरागहान्या

रागेणैवार्पितात्मानः[5]

इति परकीयालक्षणास्पर्शेन परकीयात्वं निराकृत्य ताः स्वीयात्वेन निर्धा-
15 रिताः। अतः समञ्जसाप्राया समर्थाप्रायेति रतेर्द्वैविध्यं योग्यम्। किन्तु समञ्जसा समञ्जसाप्रायेति रतेर्द्वैविध्याद्वैविध्ययोगत्वेऽपि तत्तदाश्रयरूपाणां महिषीणां दु र्गा व्रतपराणां कन्यानाञ्च स्वीयात्वेन तन्मात्रस्वीकारादवान्तरभेदास्वीकारः। अतः पञ्चदश भेदा दर्शिताः। किन्तु केषाञ्चिद्रत्यवान्तरभेदानां श्रीप्रभुपादैरभिधयानुक्तत्वेऽपि व्यञ्जनया प्रकाशित-
20 त्वान्मया ते दर्शिताः। ननु

भौवयोगात्तु सौरिन्ध्री[6] परकीयैव सम्मता[7]

इति कु ब्जा याः परकीयात्वस्वीकारेण तादृशरागाश्रयत्वमायाति। तेन

---

1 C adds ०धा० after it.
2 धन्यादिकन्याः।
3 C adds after it : तेन लिखनेन.
4 C omits निर्णीत०.
5 UN, p. 52.
6 कुब्जा।
7 UN, p. 106 with सैरन्ध्री for सैरिन्ध्री.

का त्या य नी व्रतपरकन्याभ्योऽप्युत्कर्षप्राप्तेः कथं साधारणरत्याश्रयत्वेन ताभ्यो[1]ऽतिन्यूनत्वं[2] दर्शितम्। तत्राह

सामान्या या रसाभासप्रसङ्गात्ताद्दगप्यसौ[3]

इत्यनेन प्रकटप्रार्थनया रसाभासाश्रय[107a]त्वेन भासमानतया पर-
5 कीयात्वमूलताद्दशरागाभावेन परकीयात्वं निषिद्धं भावयोगात्स्वित्यनेन।

सामान्यवनिता वेश्या सा द्रव्यं परमिच्छति।
गुणहीने च[4] न द्वेषो नानुरागो गुणिन्यपि ॥
शृङ्गाराभास एवात्र न शृङ्गारः कदाचन ॥१६॥[5]

इति लक्षितसामान्यवनितात्वमपि निषिद्धम्। अत एवाव्यवस्थायां श्री कृ ष्णै-
10 कभुक्तायां कु ब्जा यामादरेण च परकीयैव सम्मतेत्यसम्मतिं परित्यज्य तस्यां[6] पश्चात्परकीयात्वारोपणमिति। ननु श्री म हा प्र भो राविर्भावे निजप्रयोजनत्रयवाञ्छा मुख्यकारणत्वेन श्री क वि रा ज गो स्वा मि ना

श्री रा धा याः प्रणयमहिमा[7]

इत्यादिपद्ये दर्शिता। श्री न न्द न न्द न स्याविर्भावे निजप्रयोजनतया
15 किं मुख्यं कारणम्। तत्राह। श्री न न्द न न्द न स्य गौ र ह रि त्वे यथा स्वप्रयोजनत्रयवाञ्छा मुख्यकारणं तथा गो लो क ना थ स्य न न्द न न्द न-त्वे रसनिर्यासास्वादवाञ्छैव मुख्यकारणम्। यथा

न कृ ष्णो रसनिर्यासस्वादार्थमवतारिणि[8]

इति। अत्र तन्त्रेण व्याख्या। श्री म हा प्र भो र्लीलाया यथा प्राकट्यमप्राकट्यं
20 न न्द न न्द न लीलायास्तथा प्राकट्यमप्राकट्यम्। [107b] म हा प्र भो-र्लीलायाः प्राकट्ये निजप्रयोजनापेक्षा नास्ति तथा न न्द न न्द न स्य लीलायाः प्राकट्ये निजप्रयोजनापेक्षा नास्ति। किन्तु तत्र तत्र भक्तानुग्रह एव प्रयोजनं तत्तल्लीलास्वादनप्रापणेन तेषां तत्परताप्रापणात्[9]। ननु म हा प्र भो र्भज-

1 कन्याभ्यः।
2 कुब्जायाः।
3 UN, p. 106.
4 C ॰हीनेऽपि.
5 Cited in UN, pp. 106-7 with एतासु for एवात्र.
6 कुब्जायाम्।
7 CC. I. 1. 6. The line is: श्रीराधायाः॰ प्रणयमहिमा कीदृशो वा etc.
8 UN, p. 15.
9 C ॰प्रतिपादनात्.

नेन नन्दनन्दनप्राप्तिवन्नन्दनन्दनस्य भजनेन गोलोकनाथप्राप्ति-र्न्याय्या[1]। तत्राह। महाप्रभोर्नन्दनन्दनत्वेन तद्भजनेन तत्प्राप्ति-र्न्याय्या। तस्य तत्त्वं यथा

शचीसूनुं नन्दीश्वरपतिसुतत्वे[2]

5 इति। गोलोकनाथस्येश्वरलीलत्वान्नन्दनन्दनत्वम्। गोलोकनाथस्य नन्दनन्दनत्वं स्पष्टार्थे न तु गूढार्थे। गूढार्थे तु गोलोकनाथस्य नन्दनन्दनवैभवरूप[3]त्वम्। अत एव भक्तकर्तृकरसनिर्यासास्वाद-प्रार्पणमेव निजप्रयोजनम्। अतस्तद्भ[4]जनेन तत्प्राप्तिर्न्याय्या। नन्व-प्रकटलीलायां ससंक्षिप्त[5]पूर्वरागो नास्तीति प्रकटलीलाविशेषापेक्षा।
10 प्रकटलीलायां समृद्धिमान्सम्भोगो नास्तीत्यप्रकटलीला[6]विशेषापेक्षा। तत्त-ल्लीलायां तत्तदास्वादनमेव निजप्रयोजनम्। अत एवोज्ज्वलनीलमणौ समृद्धिमान्सम्भोगो नववृन्दावने दर्शितो न तु व्रजे। अतः समर्था-रतिस्थायिकः समृद्धिमान्सम्भोग [108a] एव रसनिर्यासत्वेन कथ्यते। पूर्वरागस्य विप्रलम्भप्रभेदरूपत्वेन[7]

15 न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते[8]

इति सम्भोगपुष्टिसाधनतया विवक्षितत्वात्। संक्षिप्ते सम्भोगस्योपचारा-बाहुल्याच्च। किञ्च। बाल्यपौगण्डकैशोरगतत्वेन महाप्रभोर्लीलास्त्रि-विधाः। तत्राप्रकटलीलायां बाल्यपौगण्डलीले न स्तः। अत एव तयोरास्वा-दनं[9] महाप्रभोः[10] प्रकटलीलायां निजप्रयोजनमिति चेत्तत्राह 'समृद्धिमान्स-

---

1 C °रिति for °र्न्याय्या.
2 SA, p. 25.
3 C omits °रूप°. 4 C °तद्भक्त°.
5 C omits it. *cf*:
युवानौ यत्र संक्षिप्तान्साध्वस-
 व्रीडितादिभिः।
उपचारान्निषेवेते स संक्षिप्त
 इतीरितः॥
 (UN, p. 571)
6 C omits °लीला°.
7 पूर्वरागस्तथा मानः प्रेमवैचित्यमित्यपि।
प्रवासश्चेति कथितो विप्रलम्भश्चतुर्विधः॥
 (UN, p. 508)
संक्षिप्तः सङ्कीर्णः सम्पन्नः समृद्धिमानिति सम्भोगश्चतुर्विधः (UN, pp. 571-81)।
8 UN, p. 507.
9 C °रास्वादनमेव.
10 C omits it.

म्भोगः प्रकटलीलायां न जातश्चेत्तदा तदर्थमप्रकटलीलाविशेषोऽपेक्ष्यः स्यात् । स तत्र जात एव । यथा

रम्यकेलिसुखेनात्र॰ मासद्वयमुवास ह[1]

इति । एकरात्रेरपि[2] ब्रह्मरात्रिततिसदृशत्वप्राप्त्या संख्याविषयत्वेऽपि मासद्वयमिति कालस्येयत्ता नरलीलाया महाद्भुतत्वव्यञ्जिका । एकरात्रेर्ब्रह्मरात्रिततिसदृशत्वप्राप्तिर्यथा

ब्रह्मरात्रिततिरप्यघशत्रो सा क्षणार्धवदगात्तव सङ्गे ।
हा क्षणार्धमपि वल्लविकानां ब्रह्मरात्रिततिवद्विरहेऽभूत् ॥१७॥[3]

इत्यादि । तथा

शरज्ज्योत्स्नीरासे[4]

इत्यादि । अत एव समृद्धिमतः सम्भोगस्य बहुतरकालव्यापि[5]त्वं न तु स्वल्पकालव्यापित्वम् । अत एव प्रक[108b]टलीलायां संक्षिप्तपूर्वरागौ समृद्धिमन्तौ जातौ । अप्रकटलीलाविशेषस्वीकारेण लीलाद्वैविध्ये किं प्रयोजनम् । किञ्च । जातप्राकट्याः पूर्वरागादिगता लीला अधुनाप्रकटा वर्तन्ते । तासां पुनः प्राकट्ये किं पूर्वरागादिरूपं निजं प्रयोजनं भविता । लीलाया अप्रकटतायां समृद्धिमत आस्वादनमस्त्येव तदर्थं प्रकटलीलाविशेष इत्यसङ्गतिरेव । ततो[6] भोजनार्थं स्नातुं गच्छन्तं पुरुषमुद्दिश्य भोक्तुं गच्छतीति वाक्यस्यानर्हत्ववत्समृद्धिमत्स[7]म्भोगार्थमवतारिणीति वचनस्यानर्हत्वम् । महाप्रभोः प्रकटलीलायां बाल्यादिगतत्रिविधलीला जाताः अप्रकटलीलाविशेषस्वीकारेण लीलाद्वैविध्ये किं प्रयोजनम् । अतो लीलाद्वैविध्यमनर्हं पूर्वोक्तदोषापातादित्यतिगूढविमतानुसार्यर्थखण्डनम् । तेन सुतरामेव गूढविमतखण्डनं जातं किमुत स्पष्टविमतखण्डनम् । रसनिर्यासोऽप्रकटलीलागतः

न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते[8]

---

1 PP. VI. 279. 26. Cited in LBA, p.166. See *ante*, III. 54.

2 *sic*. See also l. 5.

3 BC omit क्षणार्धवद्॰ विरहेऽभूत.

4 Cited in UN, p. 467. See for the full verse *ante*, III. 132.

5 C ॰व्याप्ति॰.

6 ABD omit it.

7 A ॰मतः स॰

8 UN, p. 507.

इति न्यायेन प्रकटलीलायां विरहप्रा[109a]चुर्याद्विप्रलम्भमय्या तया निष्पादितः स्वकीयाश्रयरतिस्थायिकः समृद्धिमान्सम्भोग इति स्पष्टविमतानुसार्यर्थः स्पष्टविमतखण्डनेन निरस्तः। तथा जातप्राकट्यलीलायां दुर्लभत्वादिना संक्षिप्ताद्युत्कर्ष एव रसनिर्यासः। स एव निजप्रयोजनमिति स्पष्टविमतानु-
5 सार्यर्थोऽपि स्पष्टविमतखण्डनेन निरस्त एव। पूर्वरागः[1] ससंक्षिप्तो रसनिर्यास इति गूढविमतानुसार्यर्थो[2] गूढविमतखण्डनेन निरस्तः। परकीयारतिस्थायिकशृङ्गारवत्सलोत्कर्षप्रेयउत्कर्षरूपो रसनिर्यास इति स्पष्टविमतानुसार्यर्थः स्पष्टविमतखण्डनेन निरस्त एव[3]।

अत्र व्याकरणकोषालङ्कारपुराणतर्कशास्त्रांशा विचार्याः। तत्र[4] गोपीति
10 ङीप्प्रत्ययो व्याकरणांशः। उपपतिरिति

जारस्तूपपतिः समौ

इति कोषांशः।

रागोल्लास०[5]

इत्यादिपद्ये विशेषोक्तिरलङ्कारांशः।

15 ता वार्यमाणाः पतिभिः[6]

इत्यादि पुराणांशः। रतेरसमञ्जसत्वस्य हेतुविचारस्तर्कांशः। प्रयोजनविचारश्च। महाभाववृत्तिविचार एतदवान्तर एव। तथा गूढलीलायामेकत्वव्यञ्जनप्रयोजनविचारश्च[7]। स्पष्टलीलायां पृथक्त्वव्यञ्जनविचारश्च। तत्र प्रयोजनविचारेण स्पष्टविम[109b]तगूढविमतातिगूढविमतानां
20 निरसनम्। अतिगूढविमते केचित्तन्मतवादिनो लीलाया अपरिच्छिन्नत्वं प्रयोजनं वदन्ति। तन्निरसनन्तु तर्कागोचरश्रुत्यर्थसद्दशार्थश्री गो स्वा मिचरणोक्तप्रामाण्येन[8]। वैलक्षण्य एकांशेन सालक्षण्ये चैकांशेन। वैलक्षण्ये च प्रयोजनविचारश्च तर्कांशः। तत्र मत्स्यादिलीला कृष्ण लीलयोर्लीला-

---

1 प्रकटलीलायामस्ति न तु गूढलीलायाम्।
2 C omits it.
3 C omits एव.
4 स्पष्टविमतादित्रयखण्डने।
5 Cited in UN, p. 52. For the full verse see *ante*, III. 119.
6 BP, X. 29.8a.
7 तर्कांशः। 8 C ०प्रमाणेन.

त्वेनांशेनैकेन सालक्षण्ये मत्स्यादिलीलाया नित्यत्वं प्रयोजनम् । यो ग मा या-माययोर्मायात्वेनांशेनैकेन सालक्षण्ये यो ग मा या या मायाया इव वृत्ति-द्वयाढ्यत्वं प्रयोजनम् । न न्द न न्द न गौ र ह र्यो रेकांशेन वैलक्षण्ये[1] गौ र-ह रे र्वाञ्छितत्रयास्वादकत्वं प्रयोजनम् । साजात्येन समानधर्मत्वविचारोऽपि
5 तर्कांशः[2] । यथा नामधाम्नोः साजात्ये[3]नाधुना श्री व्र ज स्य स्वप्रकाशशक्त्या प्रप्रञ्चगोचरत्वस्यानुमानम् । किञ्च श्री[4] ल लि त मा ध व गता लीला त्रिधा । स्पष्टा रहस्यरूपातिरहस्यरूपा । तत्र स्पष्टा बहिरङ्गजनवञ्चनार्था । अतो बहिरङ्गजनज्ञेया । रहस्यरूपा श्री ना र द ग र्गा दिभिर्ज्ञेया । अति-रहस्यरूपा तु श्रीमत्ये [110a] का नं श यैव[5] ज्ञेया । स्पष्टा श्री कृ ष्ण स्य
10 म थु रा द्वा र का दौ श्री रा धि का दी नां द्वा र का दौ गमनादिरूपा । अत्र[6] कृ ष्णो व सु दे व दे व की भ्यां स्वात्मजतया ज्ञातः । साधारणजनैश्च तत्सुततया ज्ञातः । एतल्लीलापरिकररूप न न्द य शो दा भ्यां स्वात्मजतया ज्ञातः । किञ्च । यस्या लीलाया यः परिकरः सा लीला तेन ज्ञातैव । रहस्यरूपा श्री कृ ष्ण स्य श्री रा धि का दी नां श्री व्र ज ए वै स्थिति-
15 रूपा । यथा तत्रैव

गा र्गी । स्वगतम् । सुदं मए तादमुहादो जं चन्दहाणुपहुदीणं कराणआ भीस्सपहुदीणं कराणआ एकतत्ता अवि विग्गहादीहिं भिराणा ज्जेव त्ति । ता बाढमेकविग्गहदा-संविहाणं मायाए च्चेअ पवञ्चिदं । होदु पच्छादो जाणिस्सं । किं दाणिं तस्स रहस्सस्स उद्दंकणेण ।[7]

20 इति । तथा तत्रैव

---

1 सर्वांशेन सालक्षण्ये ।

2 अनुमानांशः ।

3 प्रपञ्चगोचरत्वांशेन ।

4 A omits it.

5 योगमायया ।

6 स्पष्टायाम्

7 LM, I. 44. The Sanskrit *chāyā* is:
श्रुतं मया तातमुखाच्चन्द्रभानुप्रभृतीनां कन्यका भीष्मप्रभृतीनां कन्यका एकतत्त्वा अपि विग्रहादिभिर्भिन्ना एवेति । तद्बाढमेक-विग्रहतासंविधानं माययैव प्रपञ्चितम् । भवतु पश्चाद्ज्ञास्यामि । किमिदानीं तस्य रहस्यस्य उद्टङ्कनेन.

ना र [दः]। क्षणं प्रणिधाय स्वगतम्। नन्वेताः पुर ब ज[1] रमण्यः समतत्त्वा अपि विग्रहादिभिर्भिन्ना एव। यद्यपि व्र ज एव ता व्र ज रमण्यः प्रेममूर्च्छिता वर्तन्ते। किन्तु यो ग मा य यैव विप्रयोगेऽपि प्रियसङ्गसुखसङ्गमनाय तत्तं[2]वाच्छाद्य पुररमणीषु स्वाभेदाभि[3]मानेनावेशिता[4] दीर्घस्वप्न इव।

5 यास्तु[110b] द्व ब यान कु रु क्षे त्र यात्रयोर्वृत्तवर्त्स्यमानचरितास्ताः खल्वष्टोत्तरैकशतषोडशसहस्रतस्तस्मादन्या एव। तदलं तद्रहस्योद्घाटनेन।[5]

**इति। अतिरहस्यरूपा तु श्री कृ ष्ण स्य बहिरङ्गजनालक्ष्यतया[6] श्री न न्द-न न्द-न रूपेण[7] म थु रा दि गमनं विना श्री रा धि का दिभिः सार्धं व्र जे प्रकटस्थितिरूपा। यथा तत्रैव**

10 रा धि [का]। कथं विव[8]।

कृ ष्णः। स्थगितमिवापसव्यतो विलोकते।

प्रविश्य गार्ग्या सहापटीक्षेपेण

ए का नं शा। सखि रा धे माल संशयं कृथाः।[9]

**इत्यादि। स्पष्टलीलायां[10] व्र जे समृद्धिमान्सम्भोगः श्री रा धि का दीनां**

15 **समर्था[11]रतिवासितत्वेनैव जाततया पञ्चमसोपाननिरसन अन्तरङ्गायमाणान्बहिरङ्गान्प्रति तन्त्रेण दर्शितः। न त्वनन्तरङ्गायमाणान्बहिरङ्गान्प्रति[12]। तेषां समाधानस्य जातत्वात्। यथा तत्रैव**

कृ ष्णः। प्रिये भूयः किन्ते प्रियं करवाणि।

---

1 CD व्रजपुर०.
2 व्रजे।
3 C स्वाभेद०.
4 स्वप्रकाशरूपेणाभेदाभिमानेनावेशरूपा भवन्ति।
5 LM, V. 5, with समानतत्त्वा० for समतत्त्वा०; with मध्ये तु मायया परमभिन्ना कृताः as additional text after ०भिन्ना एव, and सम्प्रति for यद्यपि. It reads also ०यात्रयोर्निवृत्तवत्समानचरिता० for यात्रयोर्वृत्तवर्त्स्यमान०, of which, the former reading seems to be erroneous.
6 C ०नालक्ष्य०.
7 C omits ०ण०.
8 The Sanskrit *chāyā* : कथमिव.
9 LM, X 37. See *ante*, p. 90, ll. 1-10.
10 पुरगोकुललीलाया एकत्वव्यञ्जिकायाम्।
11 ABC ०र्थं०.
12 Cनत्वन्तरङ्गायमाणान्प्रति.

रा धि [का]। स्मितं कृत्वा। बहिरङ्गजनालक्ष्यतया श्री गो कु ल मपि तदीयस्व-
स्वरूपैरलं करवामेति।[1]

अस्यार्थः। गो कु ल मपीत्यपिशब्दात्प्रकाशभेदेनेति[2]। तथा तदीयेति व्र ज सम्बन्धिभिः समर्था[3]रति[111a]मत्तादिविशिष्टैः स्वस्वरूपैरिति[4]
5 चायातं तन्त्रेणेति।

रा धि [का]। कथं विअ।
कृ ष्णः। स्थगितमिव।[5]

इत्यादिनार्थान्तराकाङ्क्षापूर्त्यां पुनस्तत्कृतार्थान्तराक्षेपाभावात्। पुनः[6] प्रार्थनन्तु महाभावस्यातृप्तिस्वभावाल्लालसाभरेण। रहस्यरूपायां द न्त व क्रं
10 निहत्य श्री व्र जे यदा श्री कृ ष्ण स्यागमनं जातं तदा व्र ज स्थानां श्री-रा धि का दीनां मूर्च्छापगता। यो ग मा य या च निजवैभवं संवृतं। तदैव ता व्र ज वासिभिर्दृष्टाः। पूर्वं य मु ना प्रवेशादिकं सर्वं स्वप्नवज्ज्ञातं तेषाम्। अत एव[7] समर्था[8]रतिस्थायिकत्वेन समृद्धिमान्सम्भोगो जातः। अतिरहस्य-रूपायान्तु यथा श्री भा ग व त गत[9]गूढलीलायां पूर्वं दर्शितस्तथैव समृद्धि-
15 मान्सम्भोगः समर्था[10]रतिस्थायिकत्वेनैव जातः। कु रु क्षे त्र गतानां तत्प्रकाशविशेषाणां व्र ज स्थानां श्री रा धि का दीनामेकत्वव्यञ्जिका सा[11] स्पष्टलीला च तद्गता[12]। एवं द न्त व क्र वधानन्तरं श्री व्र जा-गमने[13] व सु दे व न न्द न न्द न योरेकत्वव्यञ्जिका स्पष्टा लीला च तद्गता।

---

1 LM, X. 37 with स्वस्वरूपै० for तदीयस्वस्वरूपै०.

2 पूर्णप्रकाशेन द्वारकायां तिष्ठति। पूर्णतम-प्रकाशेन बहिरङ्गजनालक्ष्यतया गोकुलं प्राप्तः।

3 C ०मर्थ०.

4 पूर्णतमा समर्था स्वरूपैर्नन्दनन्दनेन सह गोकुलं गता प्राप्ता। तस्माद्द्वारकायां पूर्णा समर्था तिष्ठति।

5 LM, X. 37 with कधम्बिअ. The Sanskrit *chāyā* : कथमिव.

6 प्रिये पुनरपि किन्ते प्रियं करवाणीति (LM, X. 37.)

7 C only अतः. D omits अत एव.

8 ABC ०मर्थ०.

9 D omits ०गत०.

10 ABC ०मर्थ०.

11 C omits it.

12 C श्रीभागवतगता.

13 C adds त्र.

स्पष्टा तथा रहस्या या लीला ल लि त मा ध वे ।
स्प[111b]ष्टस्य विमतस्यात्र खण्डनं विज्ञसम्मतम् ।
लीला चातिरहस्यातिगूढस्य[1] तस्य[2] सूदनी ॥१८॥

किञ्च । रा धि का द्विप्रकाशभेदनिरस्तविरोधाच्छ्री ल लि त मा ध व गत-
5 लीला श्री भा ग व त गतलीला समकल्पा[3] । इति विरोधखण्डनं पूर्णम् ॥

---

1 ACD ॰नु॰.
2 विमतस्य ।
3 ललितमाधवे प्रकाशान्तरेण द्वारकागतत्वेन न तु मूलप्रकाशरूपेण गता । अतः श्रीभागवतगता लीला समकल्पा ।

श्रीमद्रूपगणान्वन्दे दण्डवद्भुवि सम्पतन्[1] ।
समर्थोत्कर्षपीयूषं स्वाद्यते यैरहर्निशम् ॥१॥

## अथ समर्थोत्कर्षप्रदर्शनम् ।

सिद्धान्ततस्त्वभेदेऽपि श्रीशकृष्ण[2]स्वरूपयोः ।
5 रसेनोत्कृष्यते कृष्णरूपमेषा रसस्थितिः ॥२॥[3]

अस्यार्थः । सिद्धान्ततो भगवत्तातुरीयत्वादवतारावलीबीजत्वादवतारावली-प्रवेशस्थानत्वाच्चाभेदेऽपि श्रीस्वामिपादैः

कृष्णस्तु भगवान्स्वयं नारायण एव[4]

इति दर्शितायामेकतायामपि रसेन सर्वोत्कृष्टप्रेममयरसेनेत्यर्थः । उत्कृष्यत
10 अन्तर्भूतण्यर्थत्वादुत्कृष्टतया प्रकाश्यत इत्यर्थः । यतस्तस्य रसस्य एषैव स्थितिः स्वभावः । यत् कृष्णरूपमेवोत्कृष्टतया दर्शयतीत्यर्थः ।

मैवं[5] वादीर्महावादिन्नधुना त्वमपेशलः[6] ।
गहनैश्वर्यविज्ञानरसास्वादनयोरसि ॥३॥[7]

इति गहनैश्वर्यमपि श्री[112a]कृष्णस्य नारायणाद्‌ाधिक्ये कारण-
15 मुक्तम् । तत्तु पारमैश्वर्यपरिचर्या[8]विज्ञानेन । चेटिकयेव महादेव्याः प्रेममय-रससम्पत्तेरनुवृत्तेः पारमैश्वर्यपरिचर्यमाणपरममाधुर्याविर्भावकत्वात्तस्याः पारमैश्वर्यविज्ञानपरिचर्यमाणायाः प्रेममयरससम्पत्तेरनधिकम् । यथा

---

1 A सम्पतन्भुवि दण्डवत्.

2 A कृष्णश्रीश॰.

3 BRS (K), p. 4 with कृष्णश्रीश॰ for श्रीशकृष्ण॰. B omits the second line of the verse.

4 SD on BP, I. 3. 28 with साक्षात for स्वयं.

5 इति पुनर्गोस्वामिपादोक्तिसमाधानं मैवं वादीरिति । तेनैव ग्रन्थकर्ता सम्यगैश्वर्य-माधुर्याभ्यां कृष्णोत्कर्षमेव प्रतिपादयति । श्रीभागवतामृते श्रीरूपगोस्वामिवाक्यं तत्त्ववादिनं प्रति मैवमिति ।

अतो भवेऽनयोः प्रायो वैलक्षण्यं द्वयोर्न हि ।
दीपोत्थदीपतुल्यत्वात् स्याद्विलासविलासिनोः ॥

(LBA, p. 129)

इति तत्त्ववादिवाक्यम् ।

6 अप्रियः ।

7 LBA, p. 129.

8 C omits॰परिचर्या॰.

महादेवीनां तारतम्येन चेटिकानां तारतम्यं तथा प्रेममयरसतारतम्येन पारमैश्वर्यविज्ञानतारतम्यम् ।

अमी कृष्णे किलाद्भुताः[1]

इति यत्तत्तु[2] प्रेममयरसो[3]त्कर्षहेतुत्वादनधिकम् । अद्भुता इति नरलीलत्वाद्‌ अत एव कृष्णे नराकृति पर[4] ब्रह्म रूपे न तु गोलोकनाथरूपे ।

लीलाप्रेम्णा प्रियाधिक्यं माधुर्यं वेणुरूपयोः ।
इत्यसाधारणं प्रोक्तं गोविन्दस्य चतुष्टयम् ॥४॥[5]

इत्यत्र प्रेम्णा प्रियाधिक्यं रूपस्य माधुरीति रसेनोत्कृष्यते कृष्णरूपमित्यस्यानुवादः । अतुल्यलीलाया अतुल्यप्रेमविलासत्वेनातुल्यप्रेमान्तर्भूतत्वाल्लीला नाधिका । वेणोर्माधुरी तूत्कृष्टरूपस्य पूर्णतमत्वज्ञापकपरिच्छदावशेषमाधुरीविशेषरूप[6]त्वात्तदन्तर्भूतत्वेन [112b] नाधिका ।

चतुर्धा माधुरी तस्य व्रज एव विराजते ।
ऐश्वर्यक्रीडयोर्वेणोस्तथा श्रीविग्रहस्य च ॥५॥[7]

इत्यत्रैश्वर्यमाधुर्यंद्भुतगुणविशेषमाधुरीरूपत्वान्नाधिका । किन्तु चतुर्धामाधुरीप्रकाशकस्वभाववलितश्री व्रज रूपस्थानवैशिष्ट्यहेतुत्वेन परमप्रेममयरसवैशिष्ट्यस्य प्राप्त्या समानार्थमेतत्[8] । अनेन तत्तद्वैशिष्ट्यहेतुप्रेममयरसवैशिष्ट्यं श्री व्रजा दन्यत्र नास्तीत्यायातम् । अत एव गोलोके चतुर्धामाधुर्याभावः । चतुर्धामाधुरी समानकारणकत्वेन परस्परसापेक्षोदया । अत एकस्या उदये सत्यन्यासामुदयः । अत एव[9] कुरुक्षेत्रादि[10]गतानां श्री व्रज परिकराणां[11] रतेर्जातिभेदेन वैशिष्ट्ये सत्यपि गौणत्वम् । स-[12]हेतुकनित्यस्थानवैशिष्ट्यहेतुकस्वमुख्यताप्रकाशकस्वभावत्वात्तस्याः[13] । अत

1 BRS (K) p. 18.
2 अद्भुतमैश्वर्यम् ।
3 C °रसपरमो°.
4 A परम°.
5 BRS (K) p. 18. B omits माधुर्यं° चतुष्टयम्.
6 C omits °माधुरीविशेषरूप°
7 LBA, p. 173.
8 व्रजरूपस्थानवैशिष्ट्यम् ।
9 परमप्रेममयरसवैशिष्ट्यस्यान्यत्राविष्टस्य भावत्वात् ।
10 आदिशब्दे द्वारका ।
11 AC श्रीव्रजपरिकराणां कुरुक्षेत्रादिगतानां.
12 C स्व°.
13 समर्थाया रतेः ।

एव रतिवैशिष्ट्यस्य[1] गौणत्वेन श्रीकृष्णश्रीव्रजपरिकरयोराविर्भाव-
वैशिष्ट्यस्यापि गौणत्वम्[2]। तेन चतुर्धामाधुरीप्रकाशाभावश्च। किन्तु
रतिजातिभेदानुरूप उत्कर्षोऽस्त्येव। व्रज एव रतेः स्वमु[113a]ख्यता-
प्रकाशकस्वभावो यथा

5 वृन्दावने श्रीरी प्रेम्णा द्विभुजः क्रियते हरिः।[3]

इति। किञ्च। श्रीगोलोकनाथश्रीनारायणयोर्नरलीलात्वा-
भावादीश्वरलीलत्वाच्च तद्धेतुकप्रेममयरसस्य नातितारतम्याच्च सामान्य-
सिद्धान्तगतैकतया गोलोकपरमव्योम्नोः श्रीकृष्णनारायणवैकुण्ठ-
योरेकत्वम्। तत्र तत्र गतानां तत्तत्प्रेयसीनां श्रीशब्दवाच्यानामेक-
10 त्वञ्च। श्रीशशब्दवाच्ययोस्तयो[4]रप्येकत्वञ्च। अत एव

कृष्णस्तु भगवान्स्वयं नारायण एव[5]

इति स्वामिपादैर्व्याख्यातं तत्तु गोलोकनाथस्य मूलनारायणत्वा-
द्गोलोकनाथनारायणयोरेकत्वाभिप्रायेणेति गम्यते। अत एव

सिद्धान्ततस्त्वभेदेऽपि श्रीशकृष्णस्वरूपयोः[6]

15 इत्यत्र श्रीशो गोलोकनाथ एव नारायणस्य तदभेदविवक्षातः।
कृष्णो नराकृति परब्रह्मरूप इति गम्यते। श्रीमधुपुरीगतश्रीकृष्ण-
परिकराणां

गोलोकनाम्नि निजधाम्नि तले च तस्य
देवीमहेशहरिधामसु[7]

20 इत्यादिना वर्णितपरमव्योमोपरितलत्वश्रीगोलोकगततत्परिकरेभ्यः
परमप्रेममयरसोत्कर्षः किमुत परमव्योमगतश्रीनारायणपरिकरेभ्यः।

---

1 समर्थस्य। 2 कुरुक्षेत्रादौ।
3 UN, p. 104.
4 गोलोकनाथपरमव्योमनाथयोः।
5 SD on BP, I. 3. 28, with साक्षात् for स्वयं.
6 BRS(K) p. 4 with कृष्णश्रीश॰ for श्रीशकृष्ण॰.
7 BS, V. 43. See *ante*, II. 15. C omits देवीमहेशहरिधामसु.

अत [113b] एव तद्धेतुक[1]स्तत्तद्रूपसामान्य वै कु ण्ठ रूपस्थानाच्छ्री म धु-पु र्याः परमोत्कर्षः ।

यथा पा ता ल ख ण्डे

अहो म धु पु री धन्या वै कु ण्ठा च्च गरीयसी[2]

5 इत्यादि । अत्र वै कु ण्ठा द्रो लो क परमव्योमरूपसामान्य वै कु ण्ठा यथा म धु पु री मा थु र शब्दाभ्यां गो कु ल पुररूपसामान्य मा थु र मण्डलं वाच्यं तथा वै कु ण्ठ शब्देन तत्तद्रूपसामान्य वै कु ण्ठो वाच्यः । तद्धेतुक-[3] स्तत्तद्रूपसामान्य वै कु ण्ठ गताया ल क्ष्मी जातेः श्री व्र ज गतानां श्री कृ ष्ण प्रियाणां परमोत्कर्षः समग्रसमर्थालक्षणास्पदत्वात् । यथा

10 श्री द श मे

नायं श्रियोऽङ्ग उ नितान्तरतेः[4]

इत्यादि । तत्तद्गताया ल क्ष्मी जातेः श्री व्र जे न्द्र न न्द न प्राप्त्यर्थं तप-श्चरणात्तद्धेतुकः श्री व्र जे न्द्र न न्द न स्य श्री गो लो क ना थ परमव्योम-नाथरूपाभ्यां[5] परमोत्कर्षः । यथा तत्रैव

15 यद्वाञ्छया श्रीर्ललनाचरत्तपः[6]

इत्यादि । अत एव श्री व्र जे न्द्र न न्द न माधुर्यैकतृष्णाभ्यः श्री व्र ज सुन्दरी-भ्यस्तयोः[7] सादृश्यमप्यरोचकम् । यथा

गोपीनां पशुपेन्द्रनन्दनजुषः[8]

इत्यादि । तथा च

20 तत्रापि वल्लभाधीशनन्दनालम्बना रतिः ।
सान्द्रानन्दचमत्कारपरमावधिरिष्यते ॥६॥

यत्सुखौघलवा ऽ ग स्त्यः पिबत्येव स्वतेजसा ।
र मे श माधुरीसाक्षात्कारान[114a]न्दाब्धिमप्यलम् ॥७॥[9]

र मे शो ऽत्र रु क्मि णी ना थ त्वावस्थः । स एव गो लो क ना थ-
25 त्वावस्थः । स एव ना रा य ण श्च सुतरामेवेति । इति समर्थोत्कर्ष-प्रदर्शनं पूर्णम् ॥

---

1 परमप्रेमहेतुकः ।
2 Cited in LBA, p. 169. See *ante*, II. 6.
3 मधुपुरीपरमोत्कर्षहेतुकः ।
4 BP, X. 47. 60. See *ante*, II.36
5 C inserts here श्रीशाभ्यां.
6 BP, X. 16. 36$_a$.
7 गोलोकनाथवैकुण्ठनाथयोः ।
8 LM, VI. 14. See *ante*, II. 55.
9 BRS(K), p. 50. See *ante*, III. 96.

वन्दे न न्द तनुजस्य लीलाधामप्रियादिकम् ।
प्राकृतेऽप्राकृते यस्य सालक्षण्यं न वस्तुनि ॥१॥
श्री रू प कृतग्रन्थार्थलवास्वादनमुद्गतम् ।
श्री मु कु न्द पदाम्भोजपरागोऽत्र प्रयोजकः ॥२॥

5 स्पष्टविमतगूढविमतान्वयेऽपि जातप्राकट्यलीलानां नित्यत्वं किमुत तदतिरेके[1] एतद्दर्शयितुं किञ्चिल्लिख्यते ।[2] किञ्च

श्रीम द्भा ग व ते[3] व्यक्तं श्री कृ ष्ण चरितामृतम् ।
ते मायामोहितप्रज्ञास्तत्र येषां[4] न नित्यधीः ॥३॥
या लीला ये परिकरा यानि धामानि विग्रहः ।
10 कृ ष्ण स्य यो व्या स पादैर्वर्णितानि मुहुर्मुहुः ॥४॥
सिद्धये नित्यतादीनां[5] तेषां[6] ग्रन्थगणः कृतः ।
श्री रू प चरणाब्जैः श्री चै त न्य प्रभुशासनात् ॥५॥
यद्यदाद्यन्तवद्वस्तु तत्तन्मायाकृतं भवेत् ।
आद्यन्तरहिताः कृ ष्ण लीलाः कालस्तु तद्वशः ॥६॥
15 अनन्तानां प्रकाशानामेकत्वेन पृथक्तया ।
आस्वादो नित्यतासिद्धिर्लीलानां हि क्रमाद्भवेत् ॥७॥

यथा भा ग व ता मृ ते[7]

सदानन्तैः प्रकाशैः स्वैर्लीलाभिश्च स दीव्यति ।
तत्रैकेन प्रकाशेन कदाचिज्जगदन्तरे ।
20 सहैव स्वप[114b]रीवारैर्जन्मादि कुरुते ह रिः ॥८॥[8]

इति ।

सदोद्बुध्यं स्वतन्त्रत्वं शक्तीनां वै ह रे स्तदा ।
कालस्य स्थिरता चैव प्रकाशभिन्नता यदा ॥९॥

---

1 अन्वयाभावे ।
2 C omits स्पष्टविमत॰ लिख्यते.
3 C ॰वत॰.
4 C तेषां.
5 आदिशब्देन मितत्वामितत्वे ।
6 लीलापरिकरधामविग्रहाणाम् ।
7 C omits it.
8 LBA, p. 155.

प्रकाशानामेकतायामुद्बोधः शक्तिसम्पदाम् ।
स्वकान्ते तत्प्रतीक्षा च लीलेच्छाधीनता तथा ॥१०॥
चलत्वेऽपि स्थिरत्वं यन्मितत्वममितावपि[1] ।
कल्पत्वेऽपि नवत्वञ्च कालस्याचिन्त्यमेव तत् ॥११॥
5 ऐकरस्ये स्वरूपाणां लीलानामपि तद्भवेत् ।
लीलानां तदभावश्चेत्स्वरूपाणां स[2] किं न हि ॥१२॥[3]
उन्मज्जन्ति निमज्जन्ति कृष्ण माधुर्यसन्ततौ ।
ऐश्वर्याद्या गुणाः सर्वे तरङ्गा इव वारिधौ ॥१३॥
सिन्धोरेव तरङ्गः स्यात्तरङ्गस्य न वारिधिः ।
10 माधुर्यस्य तथैश्वर्यमैश्वर्यस्य न तद्भवेत् ॥१४॥
माधुर्यानुभवश्चेतो द्रावयेत्स्नेहसम्पदा ।
स्नेह एव भवेद्धेतुः कृष्ण आवेशसन्ततेः ।
यया देहादिसर्वेषां विस्मृतिर्जायते परा ॥१५॥
विना रागानुगामार्गं माधुर्यानुभवो न हि ।
15 विना रागानुगाभक्तसङ्गं रागानुगा कथम् ॥१६॥
विना रूप पदाम्भोजाश्रयं रागानुगापथे ।
प्रवेशः कस्य जातः स्याच्छ्रीचैतन्य कृपाफलम् ॥१७॥
श्रीमद्रूप पदाम्भोजाश्रयणन्तु तदोच्यते ।
या हि तत्कृतग्रन्थार्थशब्दविश्वासशालिता ॥१८॥
20 मुनीनामपि वाक्येषु दोषा भ्रममुखा[4] [115a] न हि ।
नित्यसिद्धस्य वाक्येषु ते कथं सम्भवन्त्युत ॥१९॥
नित्यसिद्धतया ये[5] तु गीयन्ते सर्वसत्तमैः ।
तेषु बाधकधीर्यस्य सोऽपराधी भवेद्ध्रुवम् ॥२०॥
श्रीरूप कृतग्रन्थार्थान्हित्वान्यार्थान्करोति यः ।
25 गाङ्गमम्भः परित्यज्य स कौपं वारि सेवते ॥२१॥

1 सीमारहितमपि सीमाकृतत्वम् ।

2 एकरसाभावः ।

3 C here omits. चलत्वेऽपि स्थिरत्वं॰ स किं न हि (verses, 11-12), but includes them next after the verse 26.

4 भ्रमप्रमाद विप्रलिप्सा करणापाटव । आर्ष विज्ञवाक्ये नाहि दोष एइ सब ॥

5 गोस्वाम्यादयः ।

किञ्च

प्रेम्णो[1] भेदा अवस्थाश्च नेतृनायिकयोस्तथा ।
रसश्च रसभेदाश्च नित्यानन्दैकरूपिणः ॥२२॥
अनुभावाः सात्त्विकाश्च तथा सञ्चारिणोऽखिलाः ।
5 लीलापरिकराश्चैव मध्याद्यन्तविवर्जिताः[2] ॥२३॥
धात्वर्थनित्यतासिद्धिर्विना कारकनित्यताम्[3] ।
न स्यादेव ततो नित्या लीलापरिकरा हरेः ॥२४॥
एककारकनित्यत्वे भवेद्धात्वर्थनित्यता ।
तस्यां[4] सत्यां भवेदन्यकारकस्यापि नित्यता ॥२५॥
10 प्राकृतत्वाप्राकृतत्वे कंसादीनां ततो हरेः ।
प्रथमान्मोक्षदातृत्वं[5] द्वितीयान्नित्यलीलता[6] ॥२६॥[7]
प्रतीयमानो दोषोऽपि गुणत्वे पर्यवस्यति ।
तथा गुणोऽपि दोषत्वे विदन्त्येतद्विचक्षणाः ॥२७॥
रुक्षता स्निग्धता चैव निषेधो विधिरेव च ।
15 योग्यताभावभावाभ्यां व्रजेयुर्विपरीतताम् ॥२८॥

किञ्च

विषया योगमाया या लीलापरिकरा मताः ।
मायाया अखिला जीवा माया तु मोहनात्स्मृता ॥२९॥

[115b] किञ्च

20 स्तनपानं रिङ्गणञ्च क्षुधया रोदनन्तथा ।
मृदो भक्षणमेकान्ते तथा भयपलायने ॥३०॥
अम्बयाबद्धमूर्तित्वं वत्सगोचारणन्तथा ।
असत्यभाषणं चौर्यं परदाराभिमर्षणम् ॥३१॥
माधुर्यं व्रज इत्याद्यमसाधारणमुच्यते ।
25 माधुर्यस्य पुरो ज्ञानं तत्पश्चात्तत्र सत्यधीः ॥३२॥

---

1 *Preman* is defined in UN, p. 418 as follows:
सर्वथा ध्वंसरहितं सत्यपि ध्वंसकारणे ।
यद्भावबन्धनं यूनोः स प्रेमा परिकीर्तितः ॥

2 It means: उत्पत्तिस्थितिनाशरहिताः.

3 यथा बटुर्ग्रामं गच्छतीति बटोरभावे गमनस्याभावस्तद्वत् ।

4 धात्वर्थनित्यतायाम् ।

5 प्राकृतत्वात् । 6 अप्राकृतत्वात् ।

7 C has the verses 11-12 here (see *ante*, p. 186, footnote 3).

लोभस्ततो भवेत्तत्र[1] स[2] रागाध्वप्रवर्तकः ।
माधुर्यगुणवत्त्वेऽपि तन्मयं शर्करादिकम् ॥३३॥
माधुर्यमयता तद्वत् कृष्णादीनां भवेत्सदा ।
सर्वेषां गुणि[3]द्रव्याणां माधुर्यमुत्तमो गुणः ॥३४॥
5 तारतम्येन तस्यैव द्रव्याणां तत्प्रजायते ।
धात्वर्थादिषु मिष्टत्वं माधुर्यं विज्ञसम्मतम् ॥३५॥
विनानुसन्धिमैश्वर्यं यत् कृष्णस्य प्रकाशते ।
माधुर्यावेशिनस्तत्तु मधुरैश्वर्यमुच्यते ॥३६॥
विरुद्धानन्तशक्तित्वाद्विरुद्धमुभयं न हि ।
10 युग्मं[4] तथापि गोष्ठेऽस्मिन्नैश्वर्यं मधुरं स्मृतम् ॥३७॥
प्रकाश्यं माधुरैश्वर्यं माधुर्यं गोष्ठपादिकान् ।
धिनोत्यनिष्टवर्गेभ्यो रक्षन्मुहुरिदं व्रजे ॥३८॥
कृष्णभक्तिसमुद्बोधे भक्तानां प्रेमकारणम् ।
भक्तप्रेम[5]समुद्बोधे कारणं कृष्णचेष्टितम् ॥३९॥
15 अदायि मयका शास्त्रियं ग्रन्थो विलोक्यताम् ।
श्रीमद्रूपपदाम्भोजसर्वस्वैरेव नापरैः ॥४०॥[6]

इ[116a]ति[7] ।

श्रीमद्राधारमणचरितानन्दपीयूषधारां
वारं वारं रसिकसदसि प्रेममत्तः प्रवर्षन् ।
20 स्वे शाकुण्डे[8] पुनरपि कदा श्रीमुकुन्दाख्य आरा-
न्नेत्रानन्दं प्रभुरनुपमं हा मदीयं विधाता[9] ॥४१॥

श्री[10] रूपरघुनाथयोश्चरणसरोजेषु ममास्तु रतिः ।

.इति सारसङ्ग्रहः सम्पूर्णः[11] ॥

---

1 माधुर्ये ।
2 लोभः । 3 C गुणि॰.
4 ABD युगपत्॰, which affects metre. 5 C भक्तकर्म॰.
6 C omits this verse.
7 A पूर्णम्. 8 राधाकुण्डे ।
9 इति श्रीमद्रूपगोस्वामिकृतग्रन्थलवास्वादनं समाप्तम् ।
10 C adds here ॰श्री॰.
11 B omits सम्पूर्णः.

I

## INDEX OF THE VERSES OF THE AUTHOR

*The figures refer to the Sections and the Verses*

| | |
|---|---|
| नित्यप्रियात्वश्रैष्ठ्येऽपि | II. 40 |
| नित्यसिद्धतया ये तु | VII. 20 |
| निमित्तस्यौपपत्यस्य | I. 87 |
| निमित्तावश एव स्यात् | IV. 18 |
| निश्चिता पूर्णतरता | V. 10 |
| निष्पादितं तृतीयेन | III. 24 |
| निष्पीडनात्तिलात्तैलं | I. 81 |
| नेष्टा यदङ्गिनीत्यादि | III. 124 |
| नैवासिद्धः कदाप्यल्पां | IV. 17 |
| परकीयाततः काख्या | I. 13 |
| परोढात्वं विना कर्वा | III. 106 |
| परोढात्वं विना न स्याद् | III. 104 |
| पूर्वभावो विलीनोऽपि | III. 84 |
| पूर्वरागस्य प्रौढत्वात | I. 83 |
| पौगण्डादौ स्थितेः सीमा | III. 23 |
| प्रकाशनस्य चत्वारो | I. 6 |
| प्रकाशने तृतीयेऽपि | III. 139 |
| प्रकाशानामेकताया | VII. 10 |
| प्रकाश्यं माधुरैश्वर्यं | VII. 38 |
| प्रज्ञयारस्य चतुष्कस्य | I. 99 |
| प्रतीयमानं दोषांशं | III. 126 |
| प्रतीयमानो दोषोऽपि | VII. 27 |
| प्रभावं श्रीव्रजस्यास्य | II. 38 |
| प्राकृतत्वाप्राकृतत्वे | VII. 26 |
| प्रेम्ण एवं विलासत्वाद् | III. 137 |
| प्रेम्णो भेदा अवस्थाश्च | VII. 22 |
| बहिर्मुखप्रवृत्त्यर्थं | II. 26 |
| बिभेति वयसो बाल्या | II. 54 |
| बाल्यपौगण्डलीलागद्वैरूप्या | III. 16 |
| बाल्यपौगण्डलीलागद्वैविध्या | III. 22 |
| मतप्रदर्शनेनैव | II. 57 |
| मतान्तरं समुत्थाप्य | III. 78 |
| महाभावस्तथोद्दीस | I. 82 |
| मातामहीमातृपितृ | II. 42 |
| माधुर्यमयता तद्वत् | VII. 34 |
| माधुर्यस्य पराधिक्या | V. 13 |
| माधुर्यं व्रज इत्याद्य | VII. 32 |
| माधुर्यानुभवश्चेत्तो | VII. 15 |
| मुनीनामपि वाक्येषु | VII. 19 |
| यत्र रागेतिरागोऽत्र | IV. 19 |
| यदप्रकटलीलायां | I. 23 |
| यद्धामलीलाद्वैविध्यं | II. 60 |
| यद्यदाद्यन्तवद्वस्तु | VII. 6 |
| यस्य यत्साधनं शास्त्रे | IV. 15 |
| यस्याः स्वरूपज्ञानेन | I. 55 |
| या रागपरमेयत्ता | I. 39 |
| या लीला ये परिकरा | VII. 4 |
| योगमायाकृतस्यायं | I. 19 |
| योगमायाद्वितीयाख्य | III. 131 |
| यो यस्य विषयो नित्यं | III. 89 |
| रागस्य परमेयत्ता | II. 43 |
| राधामाधवयोर्नौमि | III. 72 |
| रूक्षता स्निग्धता चैव | VII. 28 |
| लघुत्वमितिपद्यस्य | III. 118 |
| लीलाद्विरूपताभावाद् | III. 17 |
| लीलावसररूपस्य | II. 61 |
| लीलाशक्तिमनुप्राप्य | II. 50 |
| लेख्यं प्रथमतस्तत्र | I. 10 |
| लोभस्ततो भवेत्तत्र | VII. 33 |
| लोभस्य दुर्लभत्वेन | IV. 28 |
| लोभाद्वैध्या अनुष्ठाना | IV. 11 |
| वन्दे नन्दतनुजस्य | VII. 1 |
| वन्दे श्रीकृष्णचैतन्यं | II. 59 |
| वन्दे श्रीकृष्णप्रेमाणां | II. 70 |
| वन्दे श्रीराधिकादीनां भाव | III. 26 |
| वन्दे श्रीराधिकादीनां रति | II. 30 |
| वर्तते तर्हि लीलाख्य | II. 51 |
| विना द्वैरूप्यमफलं | III. 56 |
| विनानुसन्धिमैश्वर्यं | VII. 36 |

# II
# INDEX OF THE QUOTATIONS
## A
### FULL VERSES

*The figures refer to the Sections and the Verses*

## B

### FRAGMENTS OF VERSES

*The figures refer to the Pages and the Lines*

---

C

## PROSE PASSAGES

*The figures refer to the Pages and the Lines*



———

# III

## INDEX OF IMPORTANT WORDS AND TECHNICAL TERMS.

*The figures before full stop indicate the Pages and the figures before comma, semicolon or blank refer to the Lines*

## IV

# INDEX OF REFERENCES IN THE TEXT

## A

### WORKS AND AUTHORS

*The figures before full stop refer to the Pages and the figures before comma, semicolon or blank refer to the Lines*

B

## SOME IMPORTANT PLACES AND PERSONS

*The figures before full stop refer to the Pages and the figures before comma, semicolon or blank refer to the Lines*

---

V

# ADDITIONS AND CORRECTIONS

N. B. f. n. refers to footnote where line is not indicated.

| Page | Line | |
|---|---|---|
| XLVI | 28 | Read found for founded. |
| LV | 30 | Omit ' after नित्यसिद्धा-नाम. |
| LXV | 20 | Read ॰मयत्वाद्॰ for ॰मयत्त्वाद्॰. |
| LXVI | 27 | Add ॰न्ध॰ after सम्ब॰. |
| LXVIII | 25 | Read ग्रन्थस्य for ग्रन्यस्य. |
| LXIX | 6 | Read ॰भूर्तायाः for ॰मूर्ताया. |
| LXIX | 18 | Read कृ ष्णा ह्रि क॰ for कृ ष्णा ह्नि क॰. |
| LXIX | 20 | Read टीकासू॰ for टीकाषू॰. |
| LXIX | 25 | Add after वचनपङ्क्तिः —तत्कृतं गीर्वाणवाणीमयं गो वि न्द ली ला मृ तं काव्यञ्चोदाहृतम् । |
| LXX | 9 | Read शाकेऽग्निबिन्दु-वाणेन्दौ ' शाके सिन्ध्वग्नि-वाणेन्दो for शाके सिन्ध्वग्निवाणेन्दौ ' शाके-ऽग्निबिन्दुवाणेन्दौ. |
| LXXII | 14 | Read ॰गिरा॰ for ॰गिर॰ |

| Page | Line | |
|---|---|---|
| 5 | 4 | Read ॰शितो for ॰शितः ।. |
| 5 | (f.n. 1) | Add after LR : This reading of B is better. |
| 9 | (f.n. 2) | Read ॰च्चिणा॰ for ॰च्चेना॰ |
| 10 | 7,11,12 | Read ॰रूप॰ for ॰रुप॰. |
| 12 | 3 | Read तदुद्बोधस्य for तदुद्बाधस्य. |
| 12 | 12 | Read ॰रूप॰ for ॰रुप॰ |
| 14 | 15 | Read समञ्जसा समर्था साधारणीति for समञ्जसा-समर्थासाधारणीति. |
| 15 | 7 | Read ॰दयाभावा॰ for ॰दयभावा॰. |
| 15 | (f.n. 5) | Add after ॰वैकुल्य॰ : वैयाकुल्य is the correct grammatical form. |
| 16 | 2 | Read करणे॰ for करणो॰. |
| 16 | 8 | Read स्त्रियस्ता for स्नियस्ता. |
| 16 | 15 | Read सङ्गमस्य for सङ्गस्य. |
| 17 | 3 | Read तृप्त्येत्यर्थः for व्याप्त्येत्यर्थः. |
| 19 | 1 | Read ॰बद्ध॰ for ॰वद्ध॰. |

| Page | Line | |
|---|---|---|
| 20 | 7 | Add ०स्व० before ०स्वरूपो०. |
| 20 | (f.n. 6) | Add the following after पात्रवैशिष्ट्यम् : The text वैशिष्ट्य पात्रवैशिष्ट्याद्रतिरेवोप-गच्छति is quoted from BRS(K), p. 43. See f.n. 5 at p. 121. |
| 21 | 2 | Read सामान्यमिति for सामान्येति. |
| 22 | 8 | Read ०श्वर्य० for ०शर्य०. |
| 23 | 13 | Read ०गृहीत० for ०गृद्दीत०. |
| 23 | 14 | Read ०लीला for ०लीलां. |
| 24 | 11 | Read मे for मे. |
| 24 | 12 | Read ०वैशि० for ०वैपि०. |
| 26 | 1 | Read ०दृष्टाश्रुत० for ०दृष्टा श्रुत०. |
| 26 | 10 | Read एवाद्यगति० for एवाद्य गति० |
| 26 | (f.n. 1) | Read 404-5 for 405. |
| 30 | 2 | Read कटुतागर्वस्य for कटुता गर्वस्य. |
| 30 | (f.n.) 8) | Read IX for X. |

| Page | Line | |
|---|---|---|
| 31 | 9 | Read ०वैशिष्ट्य for ०वैशिएव्य. |
| 32 | 10 | Read ०रूपो० for ०रुपो०. |
| 32 | 18 | Read ०वस्त्वेन for ०वत्वेन. |
| 35 | 3 | Read कुतुकी for कुतकी. |
| 44 | 15 | Read ०त्वेन for ०त्वे न. |
| 45 | 6 | Read ०पादैरुरू for पादरुरू. |
| 45 | (f.n. 6) | Read श्रीमुक्ता० for श्रीमुक्रा०. |
| 46 | 10 | Read ०पृथक्रया for ०पृत्रक्रया. |
| 46 | 11 | Read गो लो क० for गो ल क० and गो लो-के for गो ल के. |
| 48 | (f.n. 10) | Read ननु for नुन. |
| 57 | 5 | Read भावस्या० for भाकस्या० |
| 61 | 7 | Read तटस्थायमानैः for तटस्थायमानः. |
| 63 | (f.n. 12) | Read *loc* for *op*. |
| 67 | 10, 12 | Read विना प्रयोजकतया for विनाप्रयोजकतया. |
| 70 | (f.n. 19) | Add after ०चित० : This is better reading. |
| 72 | 9 | Read ०प्रयोगाणाम्० for ०प्रयोगानाम्०. |

